॥ श्रीः ॥

श्रीमते हयग्रीवायनमः

श्रीमते रामानुजायनमः

# काव्यकलापः

जग्गुशिङ्गरार्यविरचितः



१९६८

॥ श्रीः ॥

श्रीमते हयग्रीवायनमः

श्रीमते रामानुजायनमः

# काव्यकलापः

जग्गुशिङ्गरार्यविरचितः



मूल्यम् : रूप्यकद्वयम्

१९६८

॥ श्रीः ॥

# विज्ञापनम्

काव्यकलापनामकोऽयं ग्रन्थः भगवतःश्रीहरेः तत्परिचर्यापराणां पूज्यतमानां दैवतानां च नानाविधस्तोत्ररूपः प्रबन्धः ।

अत्रास्मदाराध्यदैवतस्य श्रीमन्नारायणस्य स्तुतिर्विशेषतः बहुधा विरचिता किञ्चात्र काव्ये श्रीशङ्कराचार्यगुरुवरैः प्रणीतस्य "भजगोविन्दस्तोत्रस्य" "ततःकिं ततःकि"मिति काव्यस्य च अनुकरणरूपेण "भजलक्ष्मीशस्तवः" "ततःकिं ततःकि"मितिस्तवोऽपि निर्मितः । तथा भासकविकृत "पादःपायादुपेन्द्रस्य" इत्यस्य श्लोकस्य अनुकरणरूपेण "श्रीशाङ्गिस्तुतिः" "मधुराधिपतेरखिलं मधुरम्" इत्यस्यानुकरणरूपेण "यदुशैलपतेरखिलं मधुरम्" इति च नूतनप्रबन्धाः विरचिताः । एवमेव क्वचित्क्वचित् क्षेत्रेषु प्रसिद्धानां देवतानांच स्तोत्राणि निबद्धानि । तथैव भगवत्प्रेरणया स्वेच्छया निर्मितानि बहूनिस्तोत्राणि चात्र विलसन्ति । अन्यच्च "यक्षप्रश्नाख्यं" "धर्मव्याधदर्शनाभिख्यं" च नाटकद्वयं विविधविषयकश्लोकाश्च अत्र काव्यकलापे सङ्कलिताः वर्तन्ते ।

एवं पञ्चाशत्संवत्सरादारभ्य एतत्कालपर्यन्तं तदातदाविरचितानां स्तोत्रादीनामाकरमेतत्काव्यं मुद्रापयितुमसमर्थः चिरं चिन्ताकुलधीः भाग्यवशादेकदा श्रीगोपीवल्लभाभिख्यानां संस्कृतकाव्यरसास्वादननिपुणानां गीर्वाणभाषाभिवृद्धिप्रोत्साहपराणां मैसूरुसंस्थाने बेंगळूरुनगरस्थोच्चन्यायालये न्यायाधीश्वरपदमलङ्कुर्वाणानां महनीयानां दृष्टिगोचरोऽभवम् । ते तु महाशयाः अस्मद्विरचितकाव्येषु बहून् भागानाकर्ण्य अमन्दानन्दपरवशाः एतत्काव्यमुद्रणकार्ये परिपूर्णसाह्यकरणे कृतसङ्कल्पाः आत्मानुगुणैः कविताचातुर्यानुभवनिष्णातैः कैश्चिन्महाशयैः विशेषतो धनसाह्यं कारयित्वा स्वयमप्यकुर्वन् । एवं चिरविरचितानां भगवद्गुणकीर्तनपराणां काव्यानां प्रकाशनकार्ये विरचितसाह्यानां सर्वेषामपि महाशयानां आजीवितं

विनयपूर्वकं कृतज्ञत्वं सादरमावेदयामि । एतद्ग्रन्थमुद्रणविषये विशेषतः आसक्ति-पूर्वकं सम्यक्संशोध्य मुद्रयित्वा उपकृतवतां प्रभाख्यमुद्रणालयनिर्वाहकानां श्रीकृष्णाचार्यवर्याणामपि विषये सादरं उपकारस्मरणमनुसन्दधामि ।

संस्कृतकाव्याभिवृद्धिकुतूहलिनस्सहृदयास्सर्वेऽपि विद्वांसः अतीवनूतन-कविविरचितकाव्यमपीदं भगवत्स्तोत्ररूपमिति परिगणय्य कृपया सादरमङ्गीकृत्य सम्यगवलोक्य गुणदोषविमर्शनैः यथायोग्यं निर्णयं कुर्वन्तु । अथ गुणाधिक्येसति अस्य ग्रन्थस्य प्रचारस्सर्वत्र यथाभवेत्तथा प्रयत्नपूर्वकमुपकुर्वन्त्विति सविनयं प्रार्थये ।

इति ग्रन्थकर्ता,

**जग्गुशिङ्गरार्यदासः**

# FOREWORD

It is with great pleasure and privilege that I write a Foreword to this Book of Samskrit compositions by the author Sri Jaggu Singra Iyengar.

Samskrit language furnishes the only avenue to the cultural past of our country. It is a sad feature of our times that the study and cultivation of Samskrit has become greatly neglected. It is the duty of every lover of our cultural heritage not only to study and cultivate Samskrit but also to encourage its learning in others.

I met the author of this book a few months back when I learnt from him that though he had composed a large part in this book some time ago, he could not get them published for want of monetary resources. The author is a retired Samskrit Pandit with a meagre pension. His position could not of course enable him to get his works published. I therefore contacted the following friends of mine who are all lovers of Samskrit and arranged a meeting between them and the author. The author read extracts from his compositions and explained them in his own inimitable way. My friends namely, Sriyuts (1) B. Vedanta Iyengar, (2) T. V. Nathamuni Iyengar, (3) T. V. Govindaraja Iyengar, (4) B. S. Keshava Iyengar, (5) C. Nagaraja Rao, (6) B. R. Keshava Iyengar and (7) M. A. Krishnamachari and I who were present at the meeting were greatly struck with the beauty of the compositions and the poetic talent displayed in them. They and other friends of mine who are also lovers of Samskrit, namely,

Sriyuts (1) S. K. Venkataranga Iyengar, (2) K. S. Ramdas, (3) S. R. Ramanathan, (4) Padubidri Raghavendra Rao and (5) M. R. Janardanam, advocates, who could not be present but who learnt of the matter all contributed generously to get the compositions printed and published. The result is this book which contains the shorter compositions of the author on a variety of subjects. There are, I learn, longer compositions in Samskrit written by the author which need a separate attempt for publication.

The author Sri Jaggu Singra Iyengar hails from a family of great Samskrit scholars of Melkote. He belongs to a school of classic scholars, which is fast disappearing at the present day in our country. Readers will find in the Samskrit preface by the author, a brief sketch of the contents of this publication. I am very happy to associate myself with this publication. I have no doubt that this work provides a very refreshing reading to lovers of Samskrit.

Any encouragement given to the author to publish his other works will undoubtedly contribute for encouragement of Samskrit learning and scholarship.

31, Madhavanagar,
Bangalore-1
20-2-1968

K. R. Gopivallabha Iyengar
*Judge, High Court of Mysore*

# अनुक्रमणिका

# कवितोत्सुकता

विद्वत्प्रेमपदं चमत्कृतिरसोन्मेषं हरेः कीर्तनात्
पूतं कीर्तिकरं मनुष्यजनुषस्सार्थक्यसंपादकम् ।
मात्सर्यान्धधियामरुन्तुदमपि, प्रेक्षाभिलाषास्पदं
सत्काव्यप्रकरं मुदा विरचयन् धन्योऽस्म्यनन्योत्सुकः ॥

मृदुपदा सरसा मधुरोर्जिता स्फुरदलङ्कृतिभिश्च मनोहरा ।
प्रियतमा कवितावनिता स्वयं रसमयं समयं कुरुते मम ॥

* स्वशक्त्या क्लृप्तं यन्नवमधु सुमानां रसकणैः
निधातुं तन्मक्षिस्सुभगसमषट्कोणपटलम् ।
करोत्यन्यासाध्यं तदखिलमपि श्रीशमहिमा
कुतश्शङ्काङ्कूरो मम कृतिमिमां वीक्ष्य विदुषाम् ॥

तिरस्कृतेः प्रतीकारः पुरस्कारः पुरस्कृतेः ।
द्वयमस्मत्कृतौ भाति स्वयमेवात्र नाग्रहः ॥

---

* कस्याञ्चित् सभायामस्मत्कृतकृष्णकथारहस्यश्लोकानाकर्ण्य मदीयकृतिविषये संशयाविष्टहृदयानां केषाञ्चिद्विदुषां सन्देहनिवारणार्थं विरचितमिदं पद्यम् ।

॥ श्रीः ॥

॥ श्रीमते श्रीहयवदनाय हरये नमः ॥

॥ श्रीमतेरामानुजाय नमः ॥

# काव्यकलापः

## एकश्लोकरामायणम्

भूत्वा दाशरथिर्वने मुनिमखं संरक्ष्य शैवं धनु-
र्भङ्क्त्वा भूमिसुतामुदूह्य समरे जित्वा मुनिं भार्गवम् ।
तातोक्त्या वनमेत्य रावणहृतां प्राप्तुं प्रियां सेतुना
तीर्त्वाब्धिं द्विषतो निहत्य दयितायुक्तोऽभिषिक्तो हरिः ॥

## एकश्लोकभागवतम्

देवक्या जठराज्जनिर्निवसतिर्नन्दस्य गेहे हृति-
र्मायायातुततेः हृतिश्च पयसां गोवर्धनाद्रेर्द्धृतिः ।
गोपस्त्रीषु रतिश्च मुष्टिचिपिटात्तृप्तिस्सतां संभृति-
र्गीताख्यामृतवृष्टिरित्यनुपमाः श्रीकृष्णलीला इमाः ॥

## श्री शारदास्तोत्रपञ्चकम्

नमामि शारदादेवीं शृङ्गगिर्यधिदेवताम् ।
यत्कृपाधीनमखिलं ज्ञानं वित्तं यशस्सुखम् ॥ १ ॥

गीः, वाणी, गीर्वाणीश्रेणीफणितगुणगणानणुकरुणा ।
वीणापाणिर्नृणां त्राणाय कृतक्षणास्तु धिषणायाम् ॥ २ ॥

पक्षिष्वक्षीणबुद्धिर्वदति भुवि शुकः त्वत्करस्पर्शपुण्यात्
त्वत्पाणिस्पर्शलाभात् कणति च मधुरं दारुदण्डस्थतन्त्री ।
एवं जाते सुजाते ! भगवति ! महिते ! भारति ! त्वत्कटाक्ष-
स्स्याच्चेन्नृणामकस्मादुपरि न हि परं वाच्यमेतन्महिम्नि ॥ ३ ॥

शारदाम्ब ! तव भूरिमहिम्नः पारदर्शनकथा भुवि नैव ।
यत्त्वदीयरथबर्हिणबर्हं शौरिरप्यकलयन्निजशीर्षे ॥ ४ ॥

सारस्वतोलगति यत्र जने कटाक्षः
सारस्स्वतो भवति वाचि जनस्य तस्य ।
सम्पद्यथेप्सितममुष्य सहैव कीर्त्या
संपद्यते तदिह तां गिरमाश्रयेऽम्बाम् ॥ ५ ॥

## श्रीकृष्णप्रार्थनापञ्चकम्

यशोदायां नन्दे सखिषु गवि गोपीषु विदुरे
शुके व्यासेऽक्रूरे यमभुवि च भीष्मेऽपि विजये ।
कुचेले कुब्जायां द्रुपदभुवि कुन्त्यां मुररिपो !
तव प्रेमा तत्तच्छ्रितजनमनोवृत्यनुगुणः ॥ १ ॥

तृणावर्तं वत्सं शकटवृषभौ पौण्ड्रकबकौ
प्रलम्बं चाणूरं यवनशिशुपालौ च रजकम् ।
अघं कंसं हंसं मुरकुवलयापीडनरकान्
रिपून् हत्वान्यानप्यनिशमवनीं पालयसि च ॥ २ ॥

इदं स्थाने भक्तानवसि कृपया शत्रुनिवहं
हरे ! हत्वा तेषामपि तव पदं यच्छसि बत ।
कथं सङ्कल्पस्ते वद मयि महापापिनि यतो
न मे भक्तिर्वैरं द्वयमपि भवत्यत्र भवति ॥ ३ ॥

विशुद्धाचारेषु प्रसरति मनो नैव सुदृढं
प्रसक्तं पापेषु प्रसभमसकृद्वारितमपि ।
न शास्त्रं नाचार्यो न च सदुपदेशो न समयः
प्रशास्ति व्रात्यं मां तदिह भव शौरे मम गतिः ॥ ४ ॥

दयाब्धे ! श्रीकृष्ण ! व्यवहृतिसुदूरात्ममहिमन्
मुहुर्याचे दीनो विरचितमहापापनिचयः ।
विभूत्यां लीलायाः अयमिह ममास्तीति कलयन्
स्वयं रक्ष प्रेम्णा न किमपि परं चिन्तय मनाक् ॥ ५ ॥

## श्रीगोदास्तुतिपञ्चकम्

तुलसीवनजां गोदां तुलनातीतवैभवाम् ।
स्वधृतस्रक्प्रदानेन सन्तोषितहरिं भजे ॥ १ ॥

त्वत्पितृविरचितमाला भक्तिभरामोदमेदुरापि हरेः ।
अनभिमता ननु गोदे! विरहितभवदङ्गसङ्गसौरभ्या ॥ २ ॥

सत्स्वन्येषु महाप्रबन्धनिवहेष्वार्यैश्शठार्यादिभिः
प्रोक्तेषु प्रचुरेषु हन्त मधुरां सन्मङ्गळोक्त्यात्मिकाम् ।
श्रीशाधिष्ठितमन्दिरेष्वहरहो गाथां यया गोदया
प्रोक्तामेव पठन्ति तादृशगिरं तां संश्रये श्रेयसे ॥ ३ ॥

श्रीगोदाचरणाम्बुजं तदनिशं वन्दे परं सुन्दरम्
तस्यास्स्वाप्नविवाहकेऽश्मनि हरिः स्पृष्ट्वा स्वयं यन्न्यधात् ।
यद्ध्यानेन निरस्तमोहतमसस्संसारिणोऽसंशयं
कंसारेः कृपयोपयान्ति परमं वैकुण्ठधाम स्थिरम् ॥ ४ ॥

जयति जगति गोदा विष्णुचित्तात्मजाता
जयति जगदधीशश्रीशसंश्लेषकामा ।
जयति मधुरसूक्तिक्रीतकृष्णोपभोक्त्री
जयति च धृतदेहा रङ्गनाथानुकम्पा ॥ ५ ॥

## बृहत्प्रस्थपुरीश्रीनिवासदेवस्य स्तोत्रपञ्चकम्

(कर्णाटभाषायां दोड्डबल्लापुरमिति नाम)

बृहत्प्रस्थपुर्यां वसन्तं प्रसन्नं श्रिया भूमिदेव्या समालिङ्गिताङ्गम् ।
समाराधकाशेषभक्तेप्सितार्थप्रदानैकसक्तं भजे वेङ्कटेशम् ॥ १ ॥

प्रसन्नवेङ्कटेश्वरस्तनुप्रतीकभागपि-
स्फुरत्प्रभावदर्शिताद्भुतक्रियावलिर्महान् ।
श्रिया भुवा च संश्रितो दयामयोऽयमाश्रितान्
जनाननारतं स्वतः पुनाति पापिनोऽप्यहो ॥ २ ॥

अणोरणीयानिति या श्रुतेर्वागङ्गुष्ठमात्रः पुरुषोऽस्ति चेति ।
तामत्र वाणीं सफलां विधातुं ह्रस्वाकृतिर्भाति हि वेङ्कटेशः ॥ ३ ॥

विविधकुसुममालालङ्कृतःश्रीनिवासः
कनककवचभास्वद्रत्नभूषाभिरामः ।
मृदुफणिफणमध्यं संश्रितः पार्श्वदारः
हरति च जनचित्तं पापिनां पापराशिम् ॥ ४ ॥

विश्वानन्दकरातिमञ्जुलवपुस्सौन्दर्यनिम्नीकृत-
श्रीभूमीदयिताद्वयानवरताक्रान्तस्वपार्श्वद्वयः ।
भोगीन्द्रायतभोगमध्यविलसन्मूर्तिः प्रसन्नाकृतिः
श्रीनाथः कुरुते रथोत्सवकृतोत्साहो जगन्मङ्गलम् ॥ ५ ॥

## श्रीनृसिंहस्तुतिपञ्चकम्

लक्ष्मीसखाय मृगराजमुखाय दृप्य-
दैत्यप्रमापणनखाय जगत्सुखाय ।
प्रह्लादपालनपराय परात्पराय
स्तम्भोद्भवाय चिदचिद्वपुषे नमस्ते ॥ १ ॥

योगाभ्यासादजस्रं मदभिमुखधियः कृच्छ्रमृच्छन्ति कीदृक्
ज्ञातव्यं चेति योगं चरसि यदि वृथा सा परीक्षा नृसिंह ।
योगेशस्यास्ति किं ते श्रम इह तपसा चेद्रमालङ्कृताङ्कः
स्यादस्माकं त्रयाणां जलनिधिदुहितुस्ते ममापीष्टसिद्धिः ॥ २ ॥

अमुक्तकलशाब्धिजाव्यतिकरस्फुरद्वक्षसा-
प्यनारतमनाहतप्रचुरयोगनिष्ठात्मना ।
त्वया नरहरे ! सदा दुरितमग्नसांसारिणा-
मवश्यकरणं तपः किमु विधीयते तत्कृते ॥ ३ ॥

कर्मण्येवाधिकारो न तु फलविषये तेऽस्ति चेति त्वदुक्तं
स्वानुष्ठानेन लोके प्रथयितुमिव तत्प्राप्तसंपूर्णकामः ।
त्यक्त्वा सङ्गं फलेषु श्रुतिशतविनुतो बद्धयोगासनस्त्वं
स्वैरं घोरं नृसिंहाचरसि किमु तपस्सर्वलोकेश्वरोऽपि ॥ ४ ॥

अंहस्तरुकुठाराय जिंहगेन्द्रासनाय ते ।
ब्रह्मरुद्रादिवन्द्याय सिंहराजाय मङ्गलम् ॥ ५ ॥

## दुर्वासक्षेत्रस्थाञ्जनेयस्तुतिः (शिवमोग्ग)

प्रख्यापितप्राभवचित्रवृत्तो भक्ताश्रयोयश्शिवमार्गवासी ।
श्रीरामपादाम्बुजभक्तिपूर्णं तमञ्जनायास्तनयं नमामि ॥ १ ॥

अविदितमदनविकारश्शृङ्गाररसान्तरङ्गवेत्तापि ।
कपिरप्यचपलभावो विपुलयशा जयति मारुतिर्जगति ॥ २ ॥

नभोऽल्परन्ध्रं जलधिस्तु कूपो रक्षोगणोमत्कुणकीटकूटः ।
रामोऽसवो यस्य गिरिः कराम्रं तस्मै नमो मारुतसूनवेऽस्तु ॥ ३ ॥

नित्यावियुक्तावपि मर्त्यभावात्
सीता च रामश्च वने वियुक्तौ ।
त्वत्साहसप्राप्तसमागमौ यत्
भवान् हि धन्यो भगवन् हनूमन् ॥ ४ ॥

स्वीयप्रयोजनकथामपि हन्त हित्वा
सेवां विदेहदुहितुः कमितुः प्रकुर्वन् ।
भक्तान् समुद्धरसि वायुसुताञ्जनेय
त्वं रामदास्यघटको गुरुराश्रितानाम् ॥ ५ ॥

युद्धे वज्रसमप्रहारचतुरः प्राकारभित्तिक्रमो
रक्षास्थानकृताववस्थितिविधौ प्रोत्तुङ्गसिंहासनम् ।
लङ्कादाहकदीपवर्तिरुदधेर्मानस्य रज्जुः परा
श्रीरामोटजशोधिनी विजयते पुच्छो महान्मारुतेः ॥ ६ ॥

श्रीरामनामामृतपानवृत्तेर्मोघीकृताशेषमहास्त्रशक्तेः ।
आद्याश्रमस्थस्य चिरायुषस्त आशास्महे किं कुशलं हनूमन् ॥ ७ ॥

तथापि ते शक्तिधृतिप्रभावश्रीरामभक्तिप्रमुखान् गुणौघान् ।
विभावयन्नेष तवाङ्घ्रिदासः संप्रार्थये भद्रकराय भद्रम् ॥ ८ ॥

पिङ्गाक्षिभ्यां भवतु कुशलं ताम्रवक्त्राय भद्रं
रामाश्लेषाद्दृतदृढमहावक्षसे क्षेममस्तु ।
पाणिभ्यां श्रीरघुवरपदाम्भोजसंवाहकाभ्यां
कल्याणं स्यात् पवनतनयस्याङ्घ्रियुग्माय भव्यम् ॥ ९ ॥

जितेन्द्रियायाखिलशब्दशास्त्रपारङ्गतायाश्रितवत्सलाय ।
सीतापतेराप्ततमाय नित्यं वातात्मजायात्मविदेऽस्तु भद्रम् ॥ १० ॥

# श्रीरामानुजस्तोत्रम्

अन्तर्गतापरिमिताश्रितवत्सलत्वं
दृष्ट्या मुखाम्बुजरुचा जगतां गुरुत्वम् ।
मृत्स्नोर्ध्वपुण्ड्रतिलकेन च वैष्णवत्वं
प्रख्यापयन् यतिपतिर्जनतां पुनाति ॥ १ ॥

वकुलाभरणाङ्घ्रिपद्मभृङ्गं यमिवृन्दाधिपयामुनान्तरङ्गम् ।
श्रुतिसारसमर्थनैकदक्षं यतिराजं श्रितपारिजातमीक्षे ॥ २ ॥

कूरेशदाशरथिसूरिमुखैस्स्वशिष्यै-
र्भूयोऽनुभूतनिजदिव्यमहाप्रभावः ।
श्रीरङ्गशेषगिरियादवशैलकाञ्ची-
जैत्रध्वजो विजयते यतिसार्वभौमः ॥ ३ ॥

अभूतपूर्वं किल भूतपुर्यां महः किमप्यस्ति सदैकरूपम् ।
स्मृतं तमो हन्ति विलोकितं चेदामोदमुच्चैर्जनयत्यपूर्वम् ॥ ४ ॥

सहस्रमुखविस्तृतामृदुतरातिरम्योज्ज्वला
हरेः प्रियतमा परं शुभकरी सदा मोददा ।
जगत्त्रितयपावनीसुविशदा च शेषाकृतेः
तनूरिव विराजते यतिकुलेन्द्रवाणी तव ॥ ५ ॥

तत्वप्रकाशावसरे यतीन्द्र चक्षुःश्रुतिस्त्वं श्रुतिचक्षुरासीः ।
मनोजनानां तमसावृतं तत् नमोऽभिरामं समताहतं च ॥ ६ ॥

पर्याप्तिपर्यङ्कसपर्यया ते सर्वेश्वरोऽसौ न तथास्ति तृप्तः ।
तिर्यक् समान् सर्वजनान् यथोर्व्यां त्रातुं प्रवृत्ते त्वयि भूतपुर्याम् ॥७॥

हस्त्यश्वाढ्यस्सुदीपः पटुपटहरवो द्राविडाम्नायगाना-
सक्तश्रीवैष्णवालिः श्रुतिपुटमधुरानेकवादित्रघोषः ।
श्वेतच्छत्रप्रफुल्लो निरवधिजनतागाढसंमर्दवृद्धो
वीथीयात्रोत्सवोऽयं जयति यतिपतेर्वेदघोषानुयातः ॥ ८ ॥

मन्दस्मिताय कुशलं नयनाम्बुजाय
भद्रं सितोर्ध्वतिलकाय शुभं शिखायै ।
क्षेमं तवाञ्जलिपुटाय च मङ्गलं स्यात्
स्वस्त्यूरुपादभुजतुन्दभुजान्तराय ॥ ९ ॥

श्रीभूतपुर्यां नवरत्नमालामिमां यतीन्द्रस्य पदारविन्दे ।
समर्पणार्थं विदुषां समाजे न्यवेदयज्जग्गुसुशिङ्गरार्यः ॥ १० ॥

## श्रीयदुगिरियतिराजविषयकस्तुतिः

सौरभ्येन च मार्दवेन च तनोश्शेषस्वरूपं भजन्
श्रीरामप्रियसेवया च सततं सौमित्रितां दर्शयन् ।
तालाङ्को मुसलं यथानिजकरे दण्डत्रयं चादधत्
लोकानामवनाय यादवगिरौ रामानुजो राजते ॥ १ ॥

यतिराजगुरोरहं पदाब्जे सुदृढां भक्तिमहर्निशं करोमि ।
यदसौ श्रितरक्षणार्थमग्रे जगदीशस्य हरेर्विवादकोऽस्ति ॥ २ ॥

यतिवर मयि धेहि प्रेमपूर्वं कटाक्षं
त्यजसि यदि विपन्नं मां न मेऽन्योऽस्ति गोता ।
वपुरिदमुपभोगाकाङ्क्षिचित्तं च मत्तं
तदनुसरति मूढोऽस्म्येवमाकृष्यमाणः ॥ ३ ॥

रामासक्तस्तथापि त्वं पूतात्मा च जितेन्द्रियः ।
यतिश्रेष्ठोऽपि भोगी त्वं विचित्रं चरितं तव ॥ ४ ॥

## श्रीस्तवदशकम्

लक्ष्मीं पक्षीशलक्ष्माढ्यवक्षस्स्थलकृतक्षणाम् ।
अतीक्ष्णेक्षणविक्षेपक्षिप्रक्षेमकरीं स्तुमः ॥ १ ॥

पुराणपुंसः परताद्यचिह्नमदोवताराद्गुणावताराम् ।
कृपावशात्रातजगत्रयीं तां रमां नमाम्यश्रुतभूमसीमाम् ॥ २ ॥

वारिताश्रितजनापदुच्चयां भूरिभाग्यविभवाधिदेवताम् ।
नीरजाक्षदयितां दयाञ्चितां क्षीरसागरसुतां रमां भजे ॥ ३ ॥

श्रियं देवीं वन्दे करकलितपद्मां शुभकरीं
सरोजान्तर्वासां विविधमणिभूषोज्ज्वलतनूम् ।
निजोत्पत्तिस्थानप्रभवदृढलग्नोर्मिवलय-
भ्रमाधायिक्षौमावृतमृदुलरम्याङ्गलतिकाम् ॥ ४ ॥

मुनिशापविलुप्तसम्पदिन्द्रो यदपाङ्गामृतवीचिसेचनेन ।
समवाप पुनश्च नाकलक्ष्मीं कुशलास्यै समुपाश्रये श्रियं ताम् ॥५॥

मुखपाणिपादमरुणाम्बुजं दृशावसितोत्पले च वसतिस्तवाम्बुजम् ।
कमलं बिभर्षि कमले! कराम्बुजे नमतां शिरस्सु सुमवत्प्रकाशसे ॥६॥

स्वयं कारुण्यार्द्रायितहृदि हरावात्मदयितेऽ
प्यविस्रम्भादम्ब प्रणयरसदम्भादयि रमे ।
समाश्रित्य प्रेयोहृदयमसकृत्पोषितदयं
विधाय प्रायस्त्वं सवृजिनजनानप्यवसि हि ॥ ७ ॥

तीक्ष्णालोकदृशा कचिज्जडदृशा पश्यन् जगद्रक्षति
स्वातन्त्र्यादवशो जनार्दन इति ख्यातः पतिस्ते रमे ।
तद्वक्षस्थलमेत्य शीतलकृपासान्द्रं मनः कुर्वती
लोकान्नावसिचेत्तदा कथमसौ संत्राणदक्षो हरिः ॥ ८ ॥

पद्मोद्भवेति प्रथितं स्वनाम विचित्ररीत्या विवृणोषि पद्मे ।
त्वदीक्षणाम्भोजवशात् त्वमेव संभूय दीनान् कुरुषे निधीनान् ॥९॥

कटाक्षलहरीं सुधारससमानसारां स्वयं
जगज्जननि मय्यपि प्रहिणु तादृशीमिन्दिरे ।
यदीयकणसेचनप्रभवतारतम्याच्चितः
कृतानृजलदोक्षहंसमुखवाहनाः केचन ॥ १० ॥

श्रीस्तवदशके भक्त्या रचितेऽस्मिन् जग्गुशिङ्गरार्येण ।
दोषान्विषह्य सन्तस्तुष्यन्तु परं रमेव गुणलेशैः ॥ ११ ॥

## श्रीबालकृष्णस्तुतिः

अम्बेतिगम्भीरगिरायशोदासंबोधकः कुम्भदधिप्रलेपात् ।
जम्बालिताङ्गोऽम्बरवर्जितोऽस्मान् बिम्बाधरः पातु सदाम्बुजाक्षः ॥१॥

मुग्धशिशुस्स्रग्धरनीलमूर्तिर्दग्धाश्रितापत्प्रकरो विदग्धः ।
दिग्धश्चपङ्कैः परिजग्धमृत्स्नः स्निग्धाङ्गनो रक्षतु दुग्धचोरः ॥ २ ॥

अव्याजमन्दस्मितभव्यवक्त्रः क्रव्याद्वधव्यक्तबलोऽव्ययात्मा ।
स्तव्यस्तवैः व्यासकृतैश्च दिव्यैरव्याच्छिशुर्लुण्ठितनव्यगव्यः ॥ ३ ॥

वेधोमुखोद्धारविधानधीरः श्रीधामवक्षाः धृतभूधरो यः ।
राधाधरस्वादुसुधावबोधो व्याधीन्ममाधीनधुना धुनोतु ॥ ४ ॥

सच्छासनोच्छ्वासितसर्वलोक-
स्स्वच्छातसीगुच्छवपुश्छविश्च ।
मृच्छेषभृच्छोणरदच्छदोऽयं
तुच्छानिकृच्छ्राणि ममोच्छिनत्तु ॥ ५ ॥

स्वर्गापवर्गास्पदमार्गदर्शी भर्गादिभिर्गीतनिसर्गभूमा ।
सुदुर्ग्रहानर्घगुणोऽर्गलं स्यात् दुर्गाग्रजोऽग्रे मम दुर्गुणानाम् ॥ ६ ॥

गोपीजनापीनकुचोपधाने स्वापी निपीताश्रितपापवापिः ।
व्यापी त्रिलोक्यामपि कोऽपि बालः पापीयसो हन्तु ममापि पापम् ॥७॥

वन्दारुवृन्दारकवृन्दसान्द्रवृन्दावनं दारितदानवेन्द्रम् ।
वन्दे तमिन्दीवरसुन्दराभं मन्दस्मितं नन्दसुतं मुकुन्दम् ॥ ८ ॥

सुरासुराराधितचारुपादसरोरुहं सूरिवरैरुपेतम् ।
धराधराधारकरारविन्दं परावरं शौरिमहं स्मरामि ॥ ९ ॥

विभाति भाभिर्भगवन् भवान् भृशं
विभर्ति भूयो बत भूभृतो भरम् ।
भियं भवद्भक्तजनाभवोद्भवां
विभिद्य भद्रं भुवि भुञ्जतेऽभितः ॥ १० ॥

रक्षः पक्षक्षोभदोऽधोक्षजोऽयं
लक्ष्मीवक्षामोक्षदानैकदक्षः ।
क्षीरक्षेपक्षुब्धमातृक्षमार्थी
रक्षत्वस्मानक्षरस्तार्क्ष्यवाहः ॥ ११ ॥

चतुरचोर चराचरचोदनोचितविचित्रचरित्र चतुर्भुज ।
चर चिरं मम चेतसि चारुदृङ्ङिचयचूचुकचन्दनचर्चित ॥ १२ ॥

गोष्ठं वरिष्ठं किल नाकपृष्ठात् श्रेष्ठा वसिष्ठादपि रासगोष्ठी ।
ज्येष्ठाद्गरिष्ठोऽसि हलायुधात्ते चेष्टानदृष्टा परमेष्ठिनापि ॥ १३ ॥

2

गुञ्जाम्बुजालङ्कृतिरञ्जिताङ्गं मञ्जीरशिञ्जाञ्चितमञ्जुलाङ्घ्रिम् ।
कुञ्जाश्रितं कुञ्जरभञ्जकं तं कञ्जाक्षमीक्षेऽञ्जनपुञ्जकान्तिम् ॥ १४ ॥

राकाशशाङ्काधिककान्तवक्त्रं श्रीकान्तमेकान्तहितैकसक्तम् ।
पाकारिकाङ्क्षात्तनिजाभिषेकं पाकं[1] त्रिलोकैकपतिं विलोके ॥ १५ ॥

श्रीबालकृष्णस्तुतिमेवमेनां चकार जग्गूत्तमशिङ्गरार्यः ।
कुर्वन्तु सन्तो निजकण्ठभूषां शौरिप्रसादाधिगमाय नित्यम् ॥ १६ ॥

## श्रीयदुशैलेशमधुरस्तुतिः

यदुभूधरभूर्मधुरा मधुजिन्मृदुपादसरोजगतिर्मधुरा ।
इह पुण्यसरोनिचयो मधुरो यदुशैलपतेरखिलं मधुरम् ॥ १ ॥

अलकामधुरास्तिलकं मधुरं किल कण्ठतलं मधुरान्मधुरम् ।
चलकर्णमणेर्गुलिका मधुरा यदुशैलपतेरखिलं मधुरम् ॥ २ ॥

अधरो मधुरश्चुबुकं मधुरं नयनं मधुरं वदनं मधुरम् ।
मकुटं मधुरं निकटो मधुरो यदुशैलपतेरखिलं मधुरम् ॥ ३ ॥

निटिलं मधुरं कटको मधुरः कटिसूत्रसुवर्णमणिर्मधुरः ।
मृदुहैमसुचेलमिदं मधुरं यदुशैलपतेरखिलं मधुरम् ॥ ४ ॥

कवचं मधुरं सुवचो मधुरं नवचन्दनगन्धमरुन्मधुरः ।
कमलावसुधानुभवो मधुरो यदुशैलपतेरखिलं मधुरम् ॥ ५ ॥

स्थानं मधुरं स्नानं मधुरं यानं मधुरं मौनं मधुरम् ।
दानं मधुरं ध्यानं मधुरं यदुशैलपतेरखिलं मधुरम् ॥ ६ ॥

शङ्खो मधुरश्चक्रं मधुरं वामकरस्थगदापि च मधुरा ।
अभयप्रदकरकमलं मधुरं यदुशैलपतेरखिलं मधुरम् ॥ ७ ॥

यतिराजसुतोत्सवजातसुसंभ्रममग्नजनप्रकरो मधुरः ।
वरसूरिगणस्तुतयो मधुराः यदुशैलपतेरखिलं मधुरम् ॥ ८ ॥

तुलसीवनमालिकया मधुरस्सुममाल्यशतैर्मधुरैर्मधुरः ।
मणिभूषणजालरुचा मधुरो यदुशैलपतिर्नितरां मधुरः ॥ ९ ॥

---

[1] पाकं अर्भकं ।

निजपादयुगाम्बुजमध्यमधिष्ठितया रमया रचितापचितिः ।
यदुशैलपतिर्मृदुहासयुतो यतिराजसुतो नितरां मधुरः ॥ १० ॥

विजितामृतदीधितिवक्त्ररुचिं कृतकैतरसूक्तिततिप्रथितम् ।
नतभक्तजनोद्धृतिसक्तमतिं यतिराजसुतं सततं नमत ॥ ११ ॥

अनिरुद्धकिरीटधराच्युत भो ! रघुरामकरार्चित कृष्णनुत ।
यदुशैलपते ! यतिराजसुत ! प्रणतार्तिहर ! प्रणमामि हरे ! ॥ १२ ॥

## अर्चाच्युतार्चनम्

वाङ्मानसाविषयदिव्यविचित्रशक्ति-
कार्यस्वरूपसुखनित्यमहत्वपूर्णम् ।
श्रीवत्सकौस्तुभसुदर्शनपाञ्चजन्य-
भाजंभजेऽब्धितनयापतिमब्जनाभम् ॥ १ ॥

अर्चाकृतिं त्वमधुना परिगृह्य सर्वं
माहात्म्यमात्मनि निगूह्य निरुद्धचेष्टः ।
स्तब्धोऽसि कृष्ण ! तदपि त्वदुदन्तमन्तः
स्मृत्वा बिभेमि च न विश्वसिमीदृशं त्वाम् ॥ २ ॥

वेदान्तमृग्यमहिमापि कृपाविशेषा-
त्त्रातुं जगन्ति यदुवंशमलंचकर्थ ।
तत्रान्वभूर्जडजनोपनतामवज्ञा-
मेवं स्थिते सुखमिहास्ति किमर्च्यरूपे ॥ ३ ॥

अस्मन्मनोनुगुणमर्पितमर्चनं तत्-
स्वीकृत्य तृप्तिमधिगन्तुमिहार्हसि त्वम् ।
चित्तेऽवधारय दृढं न च साहसेऽर्थः
मामाश्रितोऽसि सनकादिभिरर्चितोऽपि ॥ ४ ॥

चेतो मदीयमतिफल्गु न वेत्ति भक्तिं
भावान्तरं च तदलं भवदाग्रहेण ।
शक्तोऽस्मि लालनविधौ न च पोषणे ते
तत्क्लिश्यसीह भगवन्नयि किं वृथा त्वम् ॥ ५ ॥

कारागृहे त्वमुदभूःकिल वासुदेव
तत्ते सदा स्मृतिपथेऽस्त्विति मन्यमानाः ।
त्वां दभ्रसद्मनि निगूह्य पिदध्महे च
मन्तोः खलूचितमिदं श्रयतस्तवास्मान् ॥ ६ ॥

उत्तिष्ठ मन्दहसितश्च शनैर्मुकुन्द !
वाद्यं च गीतमिह नैव परंतु गाथाः ।
आर्यैःकृताःशृणु पठामि तव प्रभातं
भूयात्तदैव हि यदा क्रियते प्रबोधः ॥ ७ ॥

कोपोज्ज्वलेन मनसार्पितएषदीपो
धूपोऽपि पापपरिपोषितकालधूमः ।
आभ्यामहं त्वदुपचारमिहाचरामि
मां पापिनं श्रितवतो भवतः क्व सौख्यम् ॥ ८ ॥

भूयांस्तवास्ति सुलभे तुलसीदले हि
प्रेमा जडस्य मम संग्रहणे तुलस्याः ।
बुद्धिर्न च प्रसरति क्वचिदुद्धृतं तत्
म्लानं गृहाण तुलसीदलमल्पमेव ॥ ९ ॥

एकार्णवान्तरभवःप्रलये पदाब्जात्
गङ्गां पुरा त्वमसृजश्च तथाविधाय ।
तेऽर्घ्यं च पाद्यमपि चाचमनीयमेवं
दर्व्या ददामि किमलं पयसां पृषद्भिः ॥ १० ॥

क्षीरं दधि त्वदभिषेकविधौ प्रयुक्तं
तन्मा पिबास्यनिकटं समुपागतं त्वम् ।
पातुं ददामि भवते दधिदुग्धमन्यत्
चौर्यक्रिया दधिपयस्सु तव प्रसिद्धा ॥ ११ ॥

पीताम्बराणि यदि वाञ्छसि पीतवासः !
नाहं प्रदातुमिह तेऽस्मि हरे समर्थः ।
यो दीयते धर तमेव पटं प्रहृष्टः
चीरं पुरा हि धृतवानसि राघवस्त्वम् ॥ १२ ॥

कस्तूरिकातिलकमत्र सुदुर्लभं ते
मृत्स्नोर्ध्वपुण्ड्रमधुना कलये मुखाब्जे ।
ते कौस्तुभादिवरभूषणभूषिताय
किं रोचतेऽल्पतरमन्यविभूषणं वा ॥ १३ ॥

किं चन्दनं तव मयार्पितमप्रशस्तं
तर्हि क्व वा परमनर्घमुपानयामि ।
कुब्जागृहं स्मरसि दिव्यसुगन्धिगन्ध-
मेतद्गृहं न तदहं च न सानुरक्ता ॥ १४ ॥

कंसाश्रयेण वरमाल्यकृतार्पितानि
माल्यानि भक्तिभरभव्यतमानि चित्ते ।
शौरे ! स्मरन् प्रमुदितो भव नात्र तादृक्-
स्रग्लभ्यते मयि वृथा तव लालसा सा ॥ १५ ॥

छत्रं च चामरमहं तव पूजनार्थं
संगृह्य वेश्मनि निवेशयितुं न शक्तः ।
गोरक्षणार्थमटवीमटतस्तवैते
को वा ददाविह गृहान्तरमू कुतस्ते ? ॥ १६ ॥

अन्येभ्यो बहुधा प्रदर्श्य भगवन् ! त्वं विश्वरूपं पुरा
तानत्रासयएव किं तु न भवानालोकयत्तत्स्वयम् ।
आदर्शे यदि दर्शयामि भवते तद्विश्वरूपं पुनः
धृत्वालोक्य बिभेषि भोः ! त्वमपि तन्मास्त्वेव ते दर्पणम्
॥ १७ ॥

वेणुस्वनैःपरवशो हरिणो यथा वा
नागस्वरेण भुजगश्च यथा तथैव ।
त्वन्नामकीर्तनत एव जनस्य वश्य-
स्तच्चित्तवृत्तिमपि नैव परीक्षसे त्वम् ॥ १८ ॥

स्तुत्या जनस्य विवशो ह्यपि दास्यवृत्तिं
कुर्वन्न वेत्सि बत तद्हृदयस्वरूपम् ।
अन्तर्नियन्तुरयि ! ते किमयं प्रभावः
किं वा व्रतं किमुत मौढ्यमिदं न जाने ॥ १९ ॥

भक्ष्यं च भोज्यमपि ते पुरतस्समर्प्य
भुङ्क्ष्वेति वच्मि च तथापि दृशैव पश्यन् ।
तृप्तो भवाथ यदि भोक्तुमपि प्रवृत्तः
पश्चान्न तत्तव दृशोरपि दर्शयामि ॥ २० ॥

एलालवङ्गघनसारविहीनमेत-
त्ताम्बूलमम्बुजविलोचन ! चर्वणार्थम् ।
अत्रार्पितं परिगृहाण विलम्बसे किं
ज्ञातं प्रियां हृदि दधासि ददाति सैव ॥ २१ ॥

भोगीन्द्रभोगशयनस्य यथोचितं ते
तादृक्सुतल्पपरिकल्पनमल्पभाग्यः ।
शक्नोमि नाप्तुमथवा नहि मेऽत्र चिन्ता-
ऽशेथाः पुरा वटदले तदिदं भजस्व ॥ २२ ॥

नित्यतृप्तःपूर्णकामो भक्तैरर्चां प्रतीक्षसे ।
योगेशस्यामिता भार्याः कौटिल्यं वेत्ति कस्तव ॥ २३ ॥

निघ्नोऽसि मे तदिह ते विविधाश्च चेष्टाः
स्वैरं हरे विकसितुं प्रभवन्ति नैव ।
मच्छासनानुगुणमास्व गृहे मदीये
तद्वैभवावतरणस्मरणं विमुञ्च ॥ २४ ॥

युद्धे कौरवपाण्डवैर्विरचिते भीष्मं च कर्णं तथा
द्रोणं हन्तुमधर्मपूर्णमकरोःकर्माद्भुतं निर्भयः ।
तत्प्रष्टा न तदाभवत्किमुचितं धर्मस्वरूपस्य ते
मद्गेहे त्वमधर्मकर्म कुरुषे चेद्दण्डपात्रं भवेः ॥ २५ ॥

अर्णोवतीर्णतरुणीगणवस्त्रवृन्दम्
हृत्वाकुलाः परिहसन्नवलोक्य नग्नाः ।
किं बाधसे पुनरपीदृशदुष्टचेष्टाः
नैव क्षमे किमु न तेऽस्त्यपकीर्तिभीतिः ॥ २६ ॥

हन्तुं द्विपं च परिमर्दयितुं भुजङ्गम्
धर्तुं गिरिं दधिपयांस्यपहर्तुमङ्ग ।
बृन्दारकान्दमयितुं तरुणीर्वरीतुं
किं यासि तिष्ठ निहितस्थल एव गेहे ॥ २७ ॥

क्षीरं च भक्ष्यमपिधाय महानसान्तः
शङ्के निधातुमपि गेहभुवःपुरस्तात् ।
वृक्षौ प्ररोहयितुमेकमनो निधातुम्
सत्यं बिभेमि सदने तव सन्निधानात् ॥ २८ ॥

मूढाःनिनिन्दुरनघे त्वयि मर्त्यबुद्ध्या
त्वां पूर्वमद्य सुजनान्नविलोकसे चेत् ।
दुष्टान्न दण्डयसि चेत्त्वयि तुच्छभावात्
लोहादिभिर्विरचितां प्रतिमां वदन्ति ॥ २९ ॥

तद्दर्शयार्चनवपुष्यपि ते प्रभावम्
त्वां नास्तिका अपि यथा समुपाश्रयेयुः ।
अस्मिन्कलौ पुरुषयत्नमहत्त्वबुद्धौ
देवेऽप्यदृष्टविषयेऽपि नहि प्रमाणम् ॥ ३० ॥

शक्तिं क्वचित्प्रकटयासि च न क्वचिद्वा
भक्तान्परीक्षितुमपि क्वचिदुद्यतोऽस्मि ।
प्रत्येतु वा त्यजतु वा जगदित्यनास्थो
ह्यर्चाकृतावसि तवात्र न कापि हानिः ॥ ३१ ॥

दृष्ट्वाप्यमानुषविचित्रतरात्मचेष्टाः
लोके जनाः किमखिलाश्च वशं गता मे ।
इत्थं विलोकितजगद्धृदयस्य सद्यः
तूष्णीं स्थितिस्समुचिता तव कात्र चर्चा ॥ ३२ ॥

सर्वेषु वस्तुषु सदा वससीति शास्त्रम्
हीनं त्वया न किमपि क्वचिदस्ति तस्मात् ।
संभाव्य मूर्तिषु भवन्तमनन्यभक्त्या
साक्षात्करोति मतिमान् दृढभावबन्धः ॥ ३३ ॥

आकारहीनमपि दिव्यमहाकृतिं त्वां
नानाजनिं त्वजमपि प्रवदन्ति सन्तः ।
ध्यानाय चार्चनकृते च धृताकृतिं त्वां
कृत्वार्चयन्ति यदि कोऽत्र महापराधः ॥ ३४ ॥

किं प्रस्तरादिषु कृता प्रतिमापि देवः
मौढ्यं तदित्यपलपत्यथ यःप्रवीणः ।
श्लेष्मास्थिमांसपिहिते स वधूशरीरे
प्रेम्णानुरज्यति कुतो गुरुताभिसन्धेः ॥ ३५ ॥

प्रोक्तं त्वया मम विधाय सुलक्षणास्ताः
मूर्तीश्च तत्र विधिवन्मम सन्निधानम् ।
निर्माय चार्चयत मामिति तत्तथैव
कुर्वन्बुधस्तरति नश्यति संशयात्मा ॥ ३६ ॥

श्रीत्यागराडपि पुरन्दरदासवर्यो
भक्ताग्रगःकनकदासवरश्च धन्याः ।
अर्चावतारिणमुपास्य भवन्तमन्तः
प्रत्यक्षमेव ददृशुर्व्यहरंस्त्वयैव ॥ ३७ ॥

बध्वाञ्जलिं भुवि निपत्य च दण्डवत्त्वां
याचे मुहुःकिमपि कर्तुमशक्तएषः ।
मां पाहि मुञ्चसि रुषा यदि दुष्कृतीति
स्वामिंस्तदा भवति ते करुणा हि वन्ध्या ॥ ३८ ॥

मत्स्योऽसि कूर्मोऽसि तथासि कोलो
विष्णो ! नृसिंहोऽसि च वामनोऽसि ।
कुठाररामोऽसि रघूत्तमोऽसि
बलोऽसि कृष्णोऽसि च कल्क्यसि त्वम् ॥ ३९ ॥

स्रष्टुस्स्रष्टास्यन्तकोऽप्यन्तकस्य
प्राक्च प्राचामात्मनामन्तरात्मा ।
ईशस्येशः कारणं कारणानां
कस्साकल्यात् वेत्ति नारायण ! त्वाम् ॥ ४० ॥

भो मङ्गलात्मक सदास्त्विति मङ्गलं ते
नीराजनानि वरमाङ्गलिकानि कुर्मः ।
त्वं मङ्गलानि जगतस्सकलस्य कुर्वन्
भक्तेषु मङ्गलकटाक्षसुधां निषिञ्च ॥ ४१ ॥

अर्चाच्युतार्चनमिदं किल जग्गुशिङ्ग-
रार्येण निर्मितमभूत्परभक्तिसान्द्रम् ।
जेजेतु भक्तजनचित्तनिषिक्तभावं
शौरेस्समर्चनविधौ रसपोषकं च ॥ ४२ ॥

## श्रीयदुगिरिनारायणमङ्गलाशासनम्

वेधस्तपःप्रसन्नो यस्स्वार्चारूपेण तं ययौ ।
श्रीमन्नारायणायास्तु तस्मै नित्याय मङ्गलम् ॥ १ ॥

धातुस्सकाशात्तत्पुत्रं सनत्सुतमुपेयुषे ।
श्रीमन्नारायणायास्तु सर्वाराध्याय मङ्गलम् ॥ २ ॥

ब्रह्मणे स्वहृदोऽप्यन्यां मूर्तिमुत्पाद्य दायिने ।
श्रीमन्नारायणायास्तु मङ्गलं बहुरूपिणे ॥ ३ ॥

सनत्सुतेच्छासंप्राप्तभूवासाय सुवाससे ।
श्रीमन्नारायणायास्तु भक्तायत्ताय मङ्गलम् ॥ ४ ॥

स्वानुकम्पातिपारम्याद्यदुशैलविहारिणे ।
श्रीमन्नारायणायास्तु मङ्गलं श्रीमनोविदे ॥ ५ ॥

आदिकोलाङ्गजाताम्बुकल्याणीतीरवासिने ।
श्रीमन्नारायणायास्तु मङ्गलं तीर्थरूपिणे ॥ ६ ॥

अष्टतीर्थानुसेव्यो योऽप्यष्टाक्षरमनुस्तुतः ।
तस्मै नारायणायास्तु मङ्गलं मन्त्ररूपिणे ॥ ७ ॥

क्षीराब्धिशायिश्रीनाथधृतं यन्मकुटं महत् ।
तेनालङ्कृतमूर्ध्ने स्यान्मङ्गलं श्रीसखाय ते ॥ ८ ॥

गङ्गामग्नं सुचरितं कल्याणीमनयच्च यः ।
तस्मै नारायणायास्तु महते नित्यमङ्गलम् ॥ ९ ॥

नारायणाख्यबालेन दत्तमन्नमभुङ्क्त यः ।
तस्मै नारायणायास्तु भक्तिक्रीताय मङ्गलम् ॥ १० ॥

रमार्पितमहारत्नभिक्षातोषितबालक ।
मङ्गलं भवते श्रीमन्नारायण दयानिधे ॥ ११ ॥

महापापचतुर्वेदिब्रह्मरक्षस्त्वघातिने ।
श्रीमन्नारायणायास्मै मोक्षदायास्तु मङ्गलम् ॥ १२ ॥

वराहाय नृसिंहाय श्रीरामप्रियमूर्तये ।
श्रीमन्नारायणायास्तु नानारूपाय मङ्गलम् ॥ १३ ॥

रामकृष्णाभ्यर्चिताङ्घ्रे ! दत्तात्रेयकृतार्चन ! ।
तुभ्यं नारायण ! श्रीमन् ! प्रह्लादाश्रित ! मङ्गलम् ॥ १४ ॥

अहिरक्षोवधश्रान्तलक्ष्मीसंश्लिष्टवक्षसे ।
श्रीविभक्तात्मकार्याय मङ्गलं रिपुघातिने ॥ १५ ॥

ज्ञानाश्वत्थाश्रित ! हरे ! पञ्चभागवतार्चित !
मङ्गलं योगिहृद्ध्येय ! नारायण ! सदास्तु ते ॥ १६ ॥

अवाचीबदरीक्षेत्रधाम्ने नारायणाय ते ।
विष्णुचित्ताख्यभक्ताय मोक्षदायास्तु मङ्गलम् ॥ १७ ॥

वैकुण्ठवर्धनक्षेत्रे श्वेतमृत्पूतभूतले ।
आनन्दनिलये रम्ये वसते मङ्गलं सदा ॥ १८ ॥

रामानुजार्यवात्सल्यलालिताय महात्मने ।
यतिराजात्मजायास्तु मङ्गलं करुणाब्धये ॥ १९ ॥

रमांशजातढिल्लीशपुत्र्याश्रितपदाम्बुज ।
नारायण ! हरे ! श्रीमच्चरणाम्बुज ! मङ्गलम् ॥ २० ॥

यतीन्द्रन्यस्तसर्वात्मस्वातन्त्र्याद्बालवत् सदा ।
विहारनिरतायास्तु रमया सह मङ्गलम् ॥ २१ ॥

श्रीपराशरभट्टार्याद्याचार्यैर्भक्तिभूषणैः ।
मङ्गलं सन्नुतायास्तु श्रीमन्नारायणाय ते ॥ २२ ॥

वेदान्तदेशिकस्तोत्रपात्रायाव्याजबन्धवे ।
श्रीमन्नारायणायास्तु यदुाद्रीशाय मङ्गलम् ॥ २३ ॥

आचार्योत्तंसशेषांशसौम्यजामातृयोगिना ।
सदार्चितपदाब्जाय वेदाद्रीशाय मङ्गलम् ॥ २४ ॥

आसेचनकसौन्दर्यपूर्णमङ्गलविग्रह ! ।
मन्दस्मितमुखाम्भोज ! ते नारायण ! मङ्गलम् ॥ २५ ॥

शिङ्गरार्यचलस्वान्तमुषे रम्यतनुत्विषे ।
जाग्रद्यतीन्द्रस्वस्त्युक्तिपोषितायास्तु मङ्गलम् ॥ २६ ॥

स्वीकरोतु यतीन्द्रेभ्यो मङ्गलाशासनं हरिः ।
तन्मतानुगतेनैतच्छिङ्गरार्येण निर्मितम् ॥ २७ ॥

नारायणपदालम्बैस्तदुदन्तपरैस्स्तवैः ।
नारायणपदालम्बशिङ्गरार्योद्भवैर्भवेत् ॥ २८ ॥

## श्रीशाङ्घ्रिस्तुतिः

अच्युतस्याङ्घ्रिरवतु स्वर्णदीप्रसवस्स वः ।
तृप्तोऽभून्मधुरं बालस्स्वयं चुम्बन्नयं न यम् ॥ १ ॥

रमाकरसरोजाभ्यां कोमलाभ्यां शनैश्शनैः ।
संवाहितं मुकुन्दस्य विधत्तां सम्पदं पदम् ॥ २ ॥

पादः स श्रीहरेर्हन्तु वस्सतिप्रियतमस्तमः ।
ब्रह्माण्डसीमा येनासीदाक्रान्ता सचराचरा ॥ ३ ॥

श्रीशस्य यस्य पादस्य स्वशिरोभिरजो रजः ।
वहन्नासीच्छतानन्दस्स युष्मान् रक्षतात्क्षतात् ॥ ४ ॥

बलिर्मूर्ध्ना दधाराङ्घ्रिं यं विष्णोर्भास्वतस्स्वतः ।
तस्यैकेनैव शुद्धेन पूतास्मो रेणुनाऽणुना ॥ ५ ॥

भक्त्या शिरःकपर्देन श्रीशाङ्घ्रेःप्राप यः पयः ।
तं स्मरामि जगद्वन्द्यं सर्वपापहरं हरम् ॥ ६ ॥

पादस्सपायाद्रामस्य युष्मान्योषावने वने ।
यःप्रवृत्तश्च यं धीराः ध्यायन्ति रुचिरं चिरम् ॥ ७ ॥

डिम्भत्वे ध्वस्तशकटं पदं शौरेर्भवेभवे ।
करोतु मम सान्निध्यं हृदये सततं ततम् ॥ ८ ॥

पादस्स पातु पुंसो वः पुराणस्य पुनःपुनः ।
यन्मर्दितेन फणिना त्यक्ताभूद्यमुनाऽमुना ॥ ९ ॥

तच्छ्रीशाङ्घ्रिधने सक्ताः हृष्यन्ति कनकेन के ।
गायत्युपनिषन्नित्यं यं दिव्यवचसा च सा ॥ १० ॥

श्रीशाङ्घ्रिसेवया तीर्णा नानापापोद्भवाद्भवात् ।
यान्ति तेऽपि परं धाम ये वा जघनयोनयः ॥ ११ ॥

ज्ञानिनां सततं यस्य श्रीशांघ्रेस्सन्निधिर्निधिः ।
शरण्याय पवित्राय तस्मै भूयो नमोनमः ॥ १२ ॥

जग्गुश्रीशिङ्गरार्येण श्रीशपत्संस्तवःस्तवः ।
कृतश्श्रीशाज्ञया तस्मान्नात्रास्य ममता मता ॥ १३ ॥

## ततःकिंपद्यानि

धनं भूरि लब्धं पशुक्षेत्रगेहा-
द्यनेकानि वस्तूनि सम्पादितानि ।
उदूढास्तरुण्यस्सुपुत्राश्च जाता-
स्ततःकिं ततःकिं ततःकिं ततःकिं ॥ १ ॥

परिभ्रम्य देशान्तरेषूत्तमेषु
प्रकामं विचित्राणि वस्तूनि दृष्ट्वा ।
यथेष्टं विहारेषु कालोऽपि नीतः
ततःकिं ततःकिं ततःकिं ततःकिं ॥ २ ॥

श्रमो देहदार्ढ्याय भूयान् कृतोऽभूत्
प्रसिद्धिश्च संगीतशास्त्रे समाप्ता ।
समुद्रेन्तरिक्षे कृता दूरयात्रा
ततःकिं ततःकिं ततःकिं ततःकिम् ॥ ३ ॥

निरस्ताश्च वादे कुवादास्ततःकिं
कृतं काव्यजातं मनोज्ञं ततःकिं ।
सुपात्रेषु दत्तं च वित्तं ततःकिं
सुहृद्बन्धुवर्गोऽनुनीतः ततःकिम् ॥ ४ ॥

यशःपण्डितानां सभासूपपन्नं
महीपालपूजाप्युपात्ता बहुत्र ।
मनस्तोषितं नृत्तगीतप्रमोदै-
स्ततः किं ततः किं ततः किं ततः किम् ॥ ५ ॥

वधूनां कराब्जैर्मुहुस्तल्पभागे
सुसंवाहितं गात्रमानन्दपात्रम् ।
सुहृद्बन्धुभिर्मिष्टमन्नं च भुक्तं
ततः किं ततः किं ततः किं ततः किम् ॥ ६ ॥

रिपुर्वा मनःक्लेशदाताथवाऽन्यो-
व्यथादायको नैव लोके ममास्ति ।
मया व्याधिलेशोपि नैवानुभूत-
स्ततः किं ततः किं ततः किं ततः किम् ॥ ७ ॥

यथाकाममिष्टार्थवर्गेषु सिद्धे-
ष्वपूर्वेषु सौख्येषु काङ्क्षा न शान्ता ।
पुनस्तेषु पूर्णेष्वलब्धेष्वपेक्षा
ततः किं ततः किं ततः किं ततः किम् ॥ ८ ॥

मनश्चञ्चलं चाप्यदम्यं दुराशा-
पिशाचाभिभूतं महामोहमग्नम् ।
स्थिरश्रेयसे तत्सराब्जाक्षमीड्यं
ततः किं ततः किं ततः किं ततः किम् ॥ ९ ॥

समस्ताश्च भोगास्स्थिरा नैव लोके
विपत्कारकास्ते त्यजाशाममीषु ।
भजोपेन्द्रमम्भोजनाभं दयालुं
ततः किं ततः किं ततः किं ततः किम् ॥ १० ॥

जगन्नाथ ! नारायणानन्त ! विष्णो !
हृषीकेश ! शौरे ! नृसिंहाब्धिशायिन् ! ।
भुजङ्गेन्द्रतल्पेत्यजस्रं जप त्वं
ततः किं ततः किं ततः किं ततः किम् ॥ ११ ॥

विभो ! कृष्ण ! कौमोदकीशार्ङ्गपाणे !
मुरारे ! खगेशध्वज ! श्रीनिवास !
स्वभूर्वासुदेवाच्युतेति स्तुहि त्वं
ततः किं ततः किं ततः किं ततः किम् ॥ १२ ॥

यशःप्रापकं सर्वसम्पत्प्रदं भो-
श्शुभोदर्कमेतद्द्वयं तत् श्रुणुत्वम् ।
हरेः कीर्तनं यत्तदीयार्चनं यत्
ततः किं ततः किं ततः किं ततः किम् ॥ १३ ॥

मुकुन्दं रमाकान्तमम्भोजनेत्रं
हरिं राममाराधयात्यन्तभक्त्या ।
तदीया कृपाचेत्त्वयि प्रादुरास्ते
ततः किं ततः किं ततः किं ततः किम् ॥ १४ ॥

## †श्रीकृष्णकथारहस्यम्

श्रीनाथः पुरुषोत्तमस्त्रिजगतीसंरक्षणार्थं स्वयं
मत्स्याद्यद्भुतमङ्गलावतरणो जातो यदूनां कुले ।
यो बाल्यादपि यत्नतोऽप्यपलपन् स्वान्यावतारोचितं
वृत्तं वासनया परं व्यरचयत् कृष्णस्स पुष्णातु नः ॥ १ ॥

श्रीशिङ्गरार्यसुकवेर्महितस्य पौत्रो
नारायणार्यतनयश्श्रितशिङ्गराख्यः ।
कृत्वा हरेः करुणया यदुशैलचम्पूम्
बध्नाति काव्यमिह कृष्णकथारहस्यम् ॥ २ ॥

सर्वस्वामीति शौरावनितरनिहिता भक्तिरेकास्ति येषां
येषां वा नव्यकाव्ये ललितपदततिन्यासरम्येऽस्ति सक्तिः ।
अन्यैरस्पृष्टभावां सरसतरचमत्कारसूक्तिं च येषां
श्रोतुं वाञ्छास्ति ते ते निदधतु हृदये मत्कृतिं नित्यमेताम् ॥३॥

---

† अस्मिन् श्रीकृष्णकथारहस्याभिधाने स्तोत्रे श्रीकृष्णपरमात्मना अनुष्ठीयमानं सर्वमपि कार्यजातं स्वीयमत्स्यकूर्मादिपूर्वावतारेषु विरचितानां कार्याणामनुकरणमेवेति संगतिरत्र कल्पिता । अतः प्रायशो बहुषु श्लोकेषु पूर्वावतारचेष्टिताचरणमेव श्रीकृष्णस्समतानीदिति वर्णितइति मङ्गलश्लोके "यो बाल्यादपि यत्नतोऽप्यपलपन् स्वान्यावतारोचितंवृत्तं वासनया परं व्यरचयत्" इति निदर्शितः ।

कृष्णस्य अवतारविषयकः श्लोकः—

दिव्यायुधानि च तथाद्भुतभूषणानि
संबिभ्रदेव नृवपुः कथमाविरासीः ।
त्वं वासुदेव इति सा परताप्युपेत्य
नूनं समाश्रयदिहापि हरेऽधुना त्वाम् ॥ ४ ॥

गोकुलं प्रति निर्गमनम्—

पित्रोस्समीपमपहाय गतः कुतस्त्वम्
हे कृष्ण ! गोकुलमहो शिशुभाव एव ।
बाल्येऽहनं सुररिपून् रघुनायकोऽहं
पित्रोः परोक्षमिति तद्वदिहोद्यतोऽसि ॥ ५ ॥

श्लोकद्वयेन पूतनासंहारः—

स्तन्यं प्रदातुमबलां समुपागतां प्राक्
क्षीरं पिबन् समवधीर्यदुनाथ कस्मात् ।
आदौ निहत्य वनितां रघुनायकोऽहं
प्राप्तं सदा विजयमित्यधुनाप्यहन् किम् ॥ ६ ॥

स्तने न्यस्य मुखं कृष्ण ! त्वं कथं पूतनामहन् ।
नखेन हतशत्रोस्ते मुखेनारिवधः क्षमः ॥ ७ ॥

शकटासुरसंहारः—

चूर्णीचकर्थ शकटं निकटं गतं त्वं
डिम्भत्व एव बत दुस्सहचेष्टितोऽसि ।
श्रीनाथ ! पत्ररथनाथरथाय मह्य-
मेतन्न रोचत इति व्यभिनः किमेवम् ॥ ८ ॥

पञ्चभिः श्लोकैः पादाङ्गुष्ठचुम्बनम्—

पादाङ्गुष्ठं सततमपि ते चुम्बतो बाललीला-
मालोक्यैवं मनसि कलये कृष्ण ! मायाकिशोर ।
आक्रम्यांघ्रे भुवनमखिलं मां बलेस्सौविदल्लं
हन्ताकार्षीः पुनरपि तथा मा चरेति ब्रवीषि ॥ ९ ॥

बलिनृपतिमिवान्यं भक्तवर्गं पुरेव
क्वचिदपि नय मा भोः पाद ! पाताललोकम् ।
इति किमु वदसि त्वं पूर्वकृत्येऽनुतापात्
शरणमुपगतानां रक्षणापेक्ष शौरे ! ॥ १० ॥

पुरेव लोकाक्रमणे यदि स्या-
दाशा तवांघ्रे वदने मदीये ।
सन्दर्शयाम्यत्र विनान्ययाऽऽशां
क्रमस्व लोकानिति किं ब्रवीषि ॥ ११ ॥

लालाजलासारपरम्पराभिः
पादाम्बुजं वृष्णिकुलेन्द्र ! सिञ्चन् ।
वसुन्धरायामपि कामपि त्वं
गङ्गानदीं स्रष्टुमिहोद्यतः किम् ॥ १२ ॥

शिलामपि पुराकरोश्चरण सौम्य सीमन्तिनीं
ततस्त्वयि रहस्यहं मुहुरिह ब्रवीम्यानतः ।
अनेकशतयौवतैर्मम सदा रिरंसोर्भवां-
स्तथा प्रतिपदं करोत्विति च किन्नु वा याचसे ॥ १३ ॥

श्लोकत्रयेण उदरबन्धनम्—

बद्धानां जगतां स्थलं त्विह कृतं कुक्ष्यन्तरे श्रीपते !
मोक्षस्थानमिदं पदाम्बुजमिति प्रख्यापयन्ती नृणाम् ।
माता ते सुतवत्सलापि पदयोर्बन्धं विनैवासकृत्
त्वच्चेष्टासु बबन्ध हन्त सुदृढं दाम्नोदरं कोमलम् ॥ १४ ॥

अस्यैव नाभौ कमलं सनालं
पुरोदभूदद्य यदि प्ररोहेत् ।
पीडाभवेदित्युदरं किमेषा
चेष्टोपरोधच्छलतो बबन्ध ॥ १५ ॥

तनुवलग्नजुषा शिशुनोदरे
कथमहो ध्रियतेऽखिलविष्टपम् ।
इति भयाकुलया तु यशोदया
जठरबन्धनमाचरितं ध्रुवम् ॥ १६ ॥

चतुर्भिः श्लोकैर्यमलार्जुनवृक्षभङ्गः—

सुग्रीवविस्रम्भकृते रमेश !
न्यपातयः त्वं किल सप्तसालान् ।
अद्यापि तद्वासनयैव साल-
युग्मं व्यभाङ्क्षीश्शिशुलीलयैव ॥ १७ ॥

वटपत्रमेव शयनाय जायते
प्रलयेषु तेषु जलधौ मम प्रियम् ।
असुनार्जुनद्रुयुगलेन किं फलं
भवतीति नूनमभिनश्शिशोऽथवा ॥ १८ ॥

याचिष्यमाणं प्रियया सुराणां
तरुं तदानीं तरसैव लप्स्ये ।
किमर्जुनानोकहतः फलं स्या-
दिति व्यभाङ्क्षीः किमु नन्दसूनो ! ॥ १९ ॥

त्वमर्जुनं रक्षितुमेव काङ्क्षन्
यदाभवस्तत्परिभञ्जनेच्छुः ।
तदा पुराणं भृगुनन्दनत्वं
त्वय्याविरासीदिति निश्चिनोमि ॥ २० ॥

मृद्भक्षणम्—

क्षेप्तुर्हि मृत्स्नां मुखतो मुरारे !
लीलां तवैतामवलोक्य माता ।
निवारयामास वृथा मुहुस्सा
नावैत्तदानीं किटिचेष्टितं त्वाम् ॥ २१ ॥

पञ्चभिःश्लोकैःक्षीरदधिनवनीतचौर्यवर्णनम्—

नन्दान्वयेन्द्र ! तव गोकुलमन्दिरेषु
क्षीरं विलुण्ठ्य बहुशः पिबतोऽपि शश्वत् ।
तृष्णा यतो न विरराम ततोऽत्र शङ्के
नाद्यावतारयुगलेऽप्यपिबः पयांसि ॥ २२ ॥

नाभौ निगूढः कमलाङ्कुरो मे
पुनर्जगत्सृष्टिविहारकाले ।
सम्यक्प्ररोहत्विति वाधुनैव
पयः पिवन् सिञ्चसि किं स्वकुक्षौ ॥ २३ ॥

अथवात्ममुखेऽभिदर्शितानां
निखिलानां जगतां च पोषणाय ।
बहुधा परिभर्त्सितोऽपि गोप्या
पिबसि त्वं प्रतिमन्दिरं च दुग्धम् ॥ २४ ॥

बहुधा नवनीतमाप्य खाद-
न्नहि तृप्तोऽभव एव कृष्ण ! कस्मात् ।
करुणार्द्रहृदानुतोलनार्थं
भवितव्यं कियदित्यपूरयः किम् ॥ २५ ॥

लुण्ठित्वा दधिदुग्धमन्यसदनेष्वालोलनेत्रः पिवन्
गोपीषु ग्रहणार्थमागतवतीष्वप्राप्तगत्यन्तरः ।
सङ्कोच्याथ निजाङ्गकानि निभृतस्तत्रैव नालक्ष्यथाः
कूर्माकारभृता त्वया खलु पुरा संशिक्षितोऽयं क्रमः ॥ २६ ॥

गोपबालसख्यम्—

सर्वेश्वरस्य तव सर्वविदः कथं वा
जातास्सखाय इह बालिशगोपबालाः ।
सुग्रीवमुख्यकपिसख्यमपि प्रकल्प्य
क्रीडां विधातुरथवा तव तेऽनुरूपाः ॥ २७ ॥

कालीयह्रदावगाहनम्—

दृष्ट्वा ह्रदे फणिनमाशु निपत्य तस्य
भोगावृतस्सुनिभृतश्च निमीलिताक्षः ।
मध्येऽब्धि भोगिनि कृतां निजयोगनिद्रां
स्पष्टीचकर्थ सुहृदस्तव बिभ्युरक्षाः ॥ २८ ॥

त्रिभिः श्लोकैः कालीयमर्दनम्—

कालीयमर्दनविधौ तव कोपहेतु-
र्ज्ञातः पुरा पुरहरस्य शरो यदाऽभूः ।
मौर्वीकृतेन भुजगेन तदा सुदूरं
निष्कासितोऽहमिति तं तुदसीह शौरे ॥ २९ ॥

अथवेन्द्रजिता प्रयुक्तमस्त्रं भुजगो रामतनोः प्रकल्प्य मूर्च्छाम् ।
मम शौर्ययशो जहार हन्तेत्यतिरोषात्तुदसीह तं भुजङ्गम् ॥ ३० ॥

संत्रासितौ त्वया द्वौ तिर्यञ्चौ प्राक् ततस्तु संत्रातौ ।
रघुपतिनैकः काकः परस्तु काकोदरोऽद्य यदुपतिना ॥ ३१ ॥

गोवर्धनपूजास्वीकरणम्—

इन्द्रं समाराधयितुं प्रवृत्तान् निवार्य गोवर्धनमञ्चतेति ।
उक्त्वा तदात्मा भवएव सालग्रामोपलस्यार्य तवैष धर्मः ॥ ३२ ॥

श्लोकद्वयेन गोवर्धनोद्धरणम्—

देवेन्द्रे कुपितेऽथ वर्षति तथा लोकेऽपि शोकाकुले
सर्वज्ञोऽप्यविदन्नुपायमपरं श्रान्तिं विना लीलया ।
यद्गोवर्धनपर्वतं समवहस्तत्रास्ति शौरे ! महा-
नभ्यासस्तव मन्दरक्षितिधरं धृत्वा समासादितः ॥ ३३ ॥

उताहो रामत्वे दशवदननीतां स्वदयितां
समानेतुं सेतुं जलनिधिजले कर्तुमनसः ।
ममासन् शैलाअप्युपरि सलिलस्योत्प्लवनत-
स्सहाया इत्येवं गिरिमिह समुद्धृत्य वहसि ॥ ३४ ॥

गोरक्षणम्—

गोपालनं बहुमतं विपिनान्तरे यत्
युक्तं किमार्य ! तव सर्वं जगन्नियन्तुः ।
अस्यावतारविभवस्य निदानमासी-
द्गोरूपमेव धरणेरिति वा प्रियास्ताः ॥ ३५ ॥

गोधूलिधूसरितरूपवर्णनम्—

जटां कृत्वा क्षीरैर्वटतरुभवैः काननतटे
विहर्तुस्सौन्दर्यं वदननलिने राघवतनोः ।
तवासीत्प्रेक्ष्यं तत् द्विगुणमधुना गोखुरभवैः
रजोभिस्सङ्कीर्णालुलितचिकुरे वक्त्रशशिनि ॥ ३६ ॥

वेणुवादनम्—

किमर्थं कान्तारे यदुकुलमणे ! पर्यटसि वा
कुतस्तस्मिन् वेणुं मधुरमधुरं वादयसि च ।
पुरा मां रामत्वे हरिणहतकोऽवञ्चयदिति
प्रतार्यैतान् हन्तुं विपिनभुवि नूनं प्रयतसे ॥ ३७ ॥

गोपीवस्त्रापहरणम्—

नीरक्रीडाचपलललनासंघविन्यस्तनाना-
कौशेयानामपहरणतो वेद्मि ते भावबन्धम् ।
क्रन्दिष्यन्त्याः द्रुपददुहितुर्दातुमह्नाय तानि
प्राक्सन्नद्धः किलसमभवो भक्तसंत्राणदीक्षः ॥ ३८ ॥

जलक्रीडा—

कालिन्दीनीरपूरे निजतनुरुचिभिःपोषयन् कालिमानं
विद्युद्वर्णाङ्गभाभिर्युवतिभिरभितस्संवृतस्त्वं मुरारे ।
मां या ज्ञात्वाम्बुमग्नं स्पृशति च चतुरा तद्वशोऽहं भवामी-
त्युक्त्वा ताः खेदयन् सन् जलचरचरितं प्राक्तनं किन्वकार्षीः
॥ ३९ ॥

गोपिकावृन्दात्तिरोधानम्—

त्वं भोगाः प्रणयात्मकस्त्वमथवा प्राणास्त्वमेवेति याः
कान्तारे सुदृशोऽन्वगुः प्रियतमाः त्वामेव मत्वा गतिम् ।
तास्सर्वाअपि वञ्चयन् वत तथा शौरे ! तिरोभूः कथं
रामत्वेत्वनुयात्रिकान् निशि वने ते मुञ्चतस्साधु तत् ॥ ४० ॥

कुवलयापीडमर्दनम्—

नूनं कुवलयापीडं करीन्द्रं हन्तुमुद्यतः ।
अद्यापि सिंहगन्धं तं न मुञ्चसि चिरन्तनम् ॥ ४१ ॥

श्लोकद्वयेन कंससंहारः—

कंसं तथात्मबन्धुं स्वयमेव कथं रमेश ! समहंस्त्वम् ।
मातुर्हन्ताऽत्वमभूर्मातुलहन्ताद्य हन्त ते चेष्टा ॥ ४२ ॥

कंसं हन्तुं प्रहरणमनादृत्य तस्योपरिष्टात्
निष्पत्याहन् सुनिपुण ! भवानत्र कोऽप्यस्ति हेतुः ।
प्राग्लङ्केशो मुहुरपि मया च्छिन्नकण्ठोऽपि बाणै-
रुद्यन्मूर्धाभवदयमरिस्तादृगित्यस्ति ते धीः ॥ ४३ ॥

खाण्डवदहनप्रचोदनम्—

प्रीतिः परा तव कुतो यदुनाथ ! वह्नौ
यत्पाण्डवाशितुरमुष्य चकर्थ साह्यम् ।
अत्रास्ति हेतुरथवा तव राघवत्वे
पत्नीं ररक्ष स किलात्मशिखां प्रविष्टाम् ॥ ४४ ॥

जरासन्धभयात्पलायनम्—

जरासन्धाद्भीतो मुहुरपि भवान् प्राद्रवदहो
भये हेतुकस्ते सकलजगदुद्गीतयशसः ।
अनेकस्त्रीसंघप्रणयरसपात्रे वपुषि ते
जरासन्धोद्वेगं किमु परिहरन् कृष्ण ! निरगाः ॥ ४५ ॥

शिशुपालवधः—

शिशुपालवधे शरावमेव ज्वलदुग्रारसुदर्शनं चकर्थ ।
तृणमप्यकरोः पुरा महास्त्रं भगवन् ! ब्राह्ममतो न चित्रमत्र ॥४६॥

पाण्डवेष्वर्जुनविषये प्रीत्यतिशयः—

श्रीकृष्ण ! त्वत्कटाक्षो द्रुपदनृपसुतावल्लभेष्वस्ति भूयान्
तत्राप्यस्मिन् नितान्तं प्रचुर इति मतः फल्गुने पक्षपातः ।
साह्यं तस्यैव नित्यं युधि समरचयो यत्तवोपेन्द्रताया-
स्सम्बन्धादिन्द्रजेऽस्मिन् समभवदतुला प्रीतिरेतन्न चित्रम् ॥

श्लोकद्वयेन अर्जुनरथाश्वोपचारः—

विश्वाधीशोऽप्यगणितगुणोऽप्याप्तसर्वाभिलाषोऽ-
प्यन्तर्याम्यप्यनवधिदयः पार्थसारथ्यलक्ष्यात् ।
तस्याश्वान् किं समुपचरसि श्रीश ! मन्येऽत्र हेतुं
भाव्यश्वत्वाभ्यसनममुतः प्राप्तुमेवं करोषि ॥ ४८ ॥

अथवा वागधिनाथो हयवदनोऽभूः पुरा मुरारे ! त्वम् ।
तद्गतपरमप्रेम्णा किमिह हयांस्तस्य पोषयसि ॥ ४९ ॥

सात्यकिभूरिश्रवसोर्द्वन्द्वयुद्धे भूरिश्रवोनिरसनाय अर्जुनप्रचोदनम्—

युद्धं सात्यकिना समं विरचयन् भूरिश्रवाः दूरतः
कौन्तेयेन तवोपदेशवचसां निघ्नेन सन्ताडितः ।
धर्मोऽयं किमु कृष्ण ! ते रघुपतिस्त्वं वालियुद्धे कृतां
रीतिं बोधयसीह वाश्रितजनान् त्रातुर्न ते भीरघात् ॥ ५० ॥

सान्दीपिउत्तरादीनां मृतशिशूनां पुनरुज्जीवनम्—

मृतान् शिशून् जीवयतस्तवास्मिन्
वृत्तेऽद्भुतं कृष्ण ! किमस्त्यपूर्वम् ।
पुरैव यस्मात् रघुनायकस्त्व-
मजीवयः कञ्चन विप्रसूनुम् ॥ ५१ ॥

कुचेलार्पितोपहारस्वीकरणम्—

रामावतारे त्वमगाः फलानि
शुष्काणि भोक्तुं श्रमणीकुटीरम् ।
तस्मात् सखा ते विदितान्तरङ्गः
प्रादात्कुचेलः चिपिटोपहारम् ॥ ५२ ॥

स्यमन्तकजाम्बवत्योस्स्वीकरणम्—

मथ्यमानजलधेर्मणिमेकं सुन्दरीमपि पुरा समवापः ।
तद्वदेव पुनराप्तुमनास्त्वं जाम्बवन्मथनतोऽसि कृतार्थः ॥ ५३ ॥

प्रेयसीभिस्सरससल्लापावसरे प्रसङ्गवशात् स्वकीयमत्स्याद्यवतार-द्योतकवाग्धोरणीप्रसक्तिविचारः सप्तभिश्श्लोकैः वर्ण्यते ।

मत्स्यावतारद्योतकश्श्लोकः—

नैर्घृण्यं बत वल्लभ ! प्रियतमास्वस्मासु युक्तं नु किं
भीतास्त्वय्यनुपस्थिते निशि वयं तत्सोमकस्यागमात् ।
किं ब्रूथाब्जदृशो ! हतस्सतु मयैवाम्नायहर्ता पुरा
चन्द्रोभीतिकरः प्रिय ! प्रियतमाः ! मे मीनरूपं स्मृतम् ॥ ५४ ॥

कूर्मावतारद्योतकः—

मुग्धां मां परिरभ्य पीडयसि किं मुञ्च प्रिय ! त्वत्कुच-
क्षोणीभृद्वहनात् ममापि न हि किं पीडाऽस्ति चन्द्रानने ।
एवं चेत्प्रिय ! तं च किं वहसि भोः प्राप्तुं सुधां नाथ ! तत्-
दत्या सा कथमाप्यतेऽत्र सखि ! मे कूर्माकृतिस्साक्षिणी ॥५५॥

वराहावतारद्योतकः—

हे प्रेयन् ! पृथुनीलरत्नसुषमाप्रस्पर्धिशोभाजुषः
ते क्रोडस्य विलोक्य कान्तिममितां मोहं गताऽहं मुहुः ।
त्वं भीरुस्सखि ! मां न किं यदुसुतं जानासि जाने तत-
स्त्वद्वक्षःपरिरम्भणेच्छुरवदं भो मत्किटित्वं स्मृतम् ॥ ५६ ॥

नरसिंहावतारद्योतकः—

प्रह्लादं वत्समाराडुपगतमदयस्तत्पिताऽज्ञः प्रमत्तः
शृङ्गाग्रात्पातयित्वा व्यथयति तरुणीलोलुपस्त्वं न वेत्थ ।
किं किं कान्ते ! तथाचेन्नरहरिवपुषा हन्मि तं स्तम्भजस्सन्
को वा नाथोद्यमोऽयं वृषदमनविधौ भो हिरण्यस्स्मृतोऽरिः
॥ ५७ ॥

वामनावतारद्योतकः—

सर्वास्वप्यबलासु ते प्रियतमा का नाथ ! सत्यं वद
त्वं राधे ! मम वल्लभा वत शठोऽस्येवं प्रिये ! मा वद ।
कुब्जां नाथ ! विधाय सुन्दरतनूं तस्यां तु सक्तः किल
भ्रान्ते ! कुब्जतनुः पुराहमभवं प्रीतिस्तु तत्रास्त्यतः
॥ ५८ ॥

परशुरामावतारद्योतकः—

किं ते कान्त ! मनोज्ञकुन्तलभरे सान्द्रा हि रेणुः प्रिये !
कुत्रासीद्विपिने गवां खुरभवा तां रेणुकां संहर ।
मा मा सुंदरि तातवाङ्निगडितः पापं त्वकार्षं पुरा
नाथोन्मादवचः कुतस्सखि ! मया तद्भार्गवत्वं स्मृतम्
॥ ५९ ॥

श्रीरामावतारद्योतकः—

भो भो नाथ ! विसृज्य फल्गु सुषिरं काष्ठं कुतश्चुम्बसि
भ्रान्ते ! वेणुरयं मनोहररवः किं नास्ति वाद्यान्तरम् ।
मुग्धे ! वंशवरेऽत्र मे बहुतरा प्रीतिर्यतोऽयं तदा
रामत्वे मम जानकीमपि दिशन् भग्नो मया दोर्मदात् ॥ ६० ॥

श्रीकृष्णलीलानिगमनश्लोकः—

इत्थं हरे ! युवतिभिस्सह वाक्प्रसङ्गे
प्रत्तावतार विभवं निजमुन्नयन् सन् ।
तासां हृदि प्रणयभक्तिरसाप्लुते त्वं
यद्वर्तसे परमधाम्न्यपि निस्स्पृहोऽसि ॥ ६१ ॥

कालिन्दीपुलिने प्रकीर्णनलिने श्रीकृष्णविश्लेषतः
तन्मूर्तिस्मरणेन तद्विरचितक्रीडाविडम्बेन च ।
तादात्म्यं प्रतिपद्य यत्परवशं जानाति नैवापरं
मच्चित्ते व्रजसंभवं हि भवतात् तद्यौवतं दैवतम् ॥ ६२ ॥

यदुपतिपदसेवासक्तचित्तास्समस्ता-
स्तदनवधिदयायाः पात्रतां यान्तु लोकाः ।
सुकविफणितयश्च प्राप्य कृष्णप्रसादं
दशसु च विजयन्तां दिक्षु कीर्त्या समेताः ॥ ६३ ॥

अधुनातनेन किल केनचित्कृतं
किमिहास्ति चेति कतिचित् व्युदासते ।
यदुनाथ ! कृष्ण ! तव वृत्तमेतदि-
त्यपरे स्तुवन्ति सकलं च तेऽर्पितम् ॥ ६४ ॥

॥ श्रीकृष्णकथारहस्यं सम्पूर्णम् ॥

॥ श्रीः ॥

॥ श्रीमतेहयग्रीवाय नमः ॥

॥ श्रीमतेरामानुजाय नमः ॥

# भजलक्ष्मीशस्तवः

भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।
जनिमृतिविपदपनोदमहेतुस्सपदि कपर्दवहि खगपतिकेतुः ॥ १ ॥

अजशिवमुखसुरपालनदक्षं भज गरुडध्वजमसुरविपक्षम् ।
द्रुपदसुतापद्दलनकटाक्षं कृपयारचितत्रिजगद्रक्षम् ॥ २ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

मूढ ! भज त्वं कमलाकान्तं सदयमनन्तं व्रज भगवन्तम् ।
वृजिनभयात्त्वां रक्षति शौरिस्त्यजति न भक्तान् जातु मुरारिः ॥३॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

विषयसुखं तद्विषमिति मत्वा वृषशैलपतिं शरणं गत्वा ।
मुहुराम्रेडितमुकुन्दनामा विहर तदर्चनरचितप्रेमा ॥ ४ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

भार्यासेवाकार्यासक्तो मातापित्रोर्भरणविरक्तः ।
नैव विमुञ्चसि वनितामोहं विषयविषाब्धौ गाहंगाहं ॥ ५ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

वनिताधनतनुपोषणमात्रं मनुषे ननु निजकर्म पवित्रम् ।
यमभटदर्शनविषमे समये वद तदखिलमपि रक्षति किमये ॥ ६ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलपते ।

बहुधनसंग्रहणेन विपत्तिस्तद्वितरार्हजनेषु सभक्तिः ।
स्थगयति सद्गुणमखिलं लोभः दानादस्ति यशस्सुखलाभः ॥ ७ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

माकुरु साधुषु शाठ्यं गूढं तेन विपत्तिस्तवैव बाढम् ।
परहितकार्यमनन्यमनस्कः कुरु निस्स्वार्थस्तरुणवयस्कः ॥ ८ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

भिन्नघटादिव सलिलं भरितं गलति किलायुस्सततं त्वरितम् ।
गतसमयस्स्तु गतोह्यनर्घः न तु विचितो निश्श्रेयसमार्गः ॥ ९ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

रोगागारं तुच्छशरीरं वाञ्छति सततं बहूपचारम् ।
तस्मात्तस्मिन् हित्वा ममतां हरिपरिचर्यां कलयात्महिताम् ॥ १० ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

बहुविधतत्वं वाचा वदसि प्रायस्तद्वत् नैवाचरसि ।
वचनैरेव न सिध्यति धर्मस्तेनाचरणैर्वयमिह कुर्मः ॥ ११ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

जहि हृदयस्थं रिपुषड्वर्गं त्वयि तैर्विजिते नह्यपवर्गम् ।
पश्यसि जन्मशतेन च तपसा नश्यति सकलं सुकृतं सहसा ॥ १२॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

दुर्लभमिति मनुजत्वं विद्धि विन्दति जन्तुस्सुकृतैस्तद्धि ।
सफलय हरिभजनेन नरत्वं महदिदमेवहि गूढं तत्वम् ॥ १३ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

नानाचिन्ताकुलधीर्नित्यं भ्रमसि न वेत्सि श्रेयःकृत्यम् ।
गुरुवरहितकरवचनश्रवणं तद्वद्बुधाचरणं शरणम् ॥ १४ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

स्मर मुरहरमहिशायिनमनिशं दुरितमहीधरभञ्जनकुलिशम् ।
सुरगणहितधृतदशावतारं श्रुतिशतपरिचितनिजगुणसारम् ॥ १५ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

बाल्यं यौवनमपि वृद्धत्वं जन्मनि जन्मन्यनुभूय त्वम् ।
क्लेशनिकाये काये भूयः कुरुषे प्रीतिं विषयविधेयः ॥ १६ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

वैद्युतविज्ञानबलात् धैर्यं प्राप्य करोषि सदाद्भुतकार्यम् ।
तदखिलमिह भुवि देहसुखार्थं मोक्षपथे तत्सकलं व्यर्थम् ॥ १७ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

चिन्तय निश्चलचित्ते विष्णुं परतरमन्यन्न विना कृष्णम् ।
तत्र कुतस्ते शङ्कातङ्कः विप्रतिपत्या भवति कलङ्कः ॥ १८ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

सञ्चर पुण्यक्षेत्रस्थानं कुरु गंगादिनदीषु स्नानम् ।
कुरु नारायणचरणध्यानं न पुनर्जन्मावाप्स्यसि नूनम् ॥ १९ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

गाङ्गेये कुरु चित्तं सक्तं गाङ्गेये त्वं मा कुरु सक्तम् ।
गां गेयां पठ हरिवदनोत्थां गां गेयां कुरु शुभकीर्त्यर्थाम् ॥ २० ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

शबरकपीश्वरराक्षसमुख्याननुगृह्य महान् विरचितसख्यान् ।
श्रीरामत्वे ररक्ष महितान् स हरिर्मुञ्चति नास्मान् प्रणतान् ॥ २१ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

अजोऽपि बहुधा विजायतेऽयं नीरूपोऽपि हि धत्ते कायम् ।
अवाप्तकामोऽपीच्छति पूजां भक्तैस्स गतिर्विपत्तिभाजाम् ॥ २२ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

बहुविधवचनैः फलमिह किं वा न हरेरधिकं विदुस्समं वा ।
शास्त्रशतैरिदमेव हि कथितं भज गोविन्दं तदिह प्रथितम् ॥ २३ ॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

हरिममुमेव समाश्रय सततं सकलसुरासुरपरिषद्भिनुतम् ।
इहपरसौख्यसुमङ्गलवृद्धिं विन्दसि सकलनिजेप्सितसिद्धिम् ॥२४॥
भज लक्ष्मीशं भज लक्ष्मीशं लक्ष्मीशं भज चपलमते ।

जग्गूशिङ्गरवरार्यएवं शङ्करगुरुवरसूक्त्यनुभावम् ।
भज लक्ष्मीशस्तवं सहर्षं चकार कृतबुधहृदयाकर्षम् ॥

———

॥ श्रीः ॥

॥ श्री हयग्रीवाय नमः ॥

॥ श्रीमतेरामानुजाय नमः ॥

# यक्षप्रश्ननाटकम्

सूत्रधारः — (प्रविश्य)

वाङ्मानसाविषयदिव्यविचित्रशक्ति-
कार्यस्वरूपमुखनित्यमहत्वपूर्णम् ।
श्रीवत्सकौस्तुभसुदर्शनपाञ्चजन्य-
भाजं भजेऽब्धितनयापतिमब्जनाभम् ॥

(नेपथ्ये) भो वत्साः !

सूत्रधारः—(कर्णं दत्वा) अये ! किमेतत् ? धर्मराजस्य ध्वनिरिव श्रूयते । अहो ! ज्ञातं—विप्रवरस्य यज्ञसाधनमरणिं कुरङ्गापहृतमन्विष्यन् भ्रातृभिस्सह युधिष्ठिरः इतएवागच्छतीति ज्ञायते । तदहमपसर्पामि (इत्यपसरति) । (ततः प्रविशति यथानिर्दिष्टो धर्मराजः) ।

धर्मराजः—भो वत्साः ! प्रातरारभ्य सर्वमप्यरण्यं पर्यटितं अरणिहारी हरिणो नोपलब्धः—आतपातिशयेन क्षुधा पिपासया च अतीव श्रान्तास्स्मः—तदिदानीं किं वा कुर्मः ?

अर्जुनः—आर्य ! स विप्रवरः यज्ञसाधनमरणिं प्राप्तुमस्मासु न्यस्तभरो विस्रब्धं प्रतिपालयन्नास्ते—अनासादितारणयः कथमुटजं प्रविशामः ? अस्मत्पौरुषपरीक्षावसरस्संप्राप्त इवेदानीं मन्ये—

भीमः—आः किं भवान् भाषते ? – स हरिणहतकः पातालं वा विशतु—दिवि देवराजाश्रयो वा भवतु—अनया गदया तं हरिणं निहत्य भूसुरवरस्य यज्ञोपकरणमानयामि—यूयं सर्वेऽत्रैव विश्रास्यध्वम् (इति गन्तुं प्रवर्तते) ।

धर्मः—वत्स ! प्रशान्तमनाभव—मा कुप्यतु भवान्—स मायामृग इत्येवं मन्ये—यतस्सव्यसाचिनश्शरस्यापि दुर्लक्ष्यः भवतो वेगस्यापि दूरे स्थितः अदृश्यो बभूव—

भीमः—अतएव तत्र मृगे अस्मत्पौरुषप्रयोगः कार्यः—

धर्मः—तिष्ठतु भवान्—भवतः पौरुषप्रयोगप्रसङ्गोऽपि कदाचिदुपपद्येत—

नकुलः—भ्रातः ! नैकं पदमपि प्रचलितुमहमिदानीमुत्सहे—अटवीपर्यटनेन नितरां श्रान्तोऽस्मि—

सहदेवः—पिपासा मामतीव बाधते—वक्तुमपि वाङ्नप्रवर्तते—किं करोमि ?

धर्मः—तर्हि कस्यचिच्छायातरोरधः किंचिद्विश्रम्य उदकपानेन परिहृतपरिश्रमाः कर्तव्यमनुसरामः।

अर्जुनः—आर्य ! नातिदूरे शीतलच्छायाशीलः तमालतरुरिव प्रतिभाति। पश्यत्वार्यः।

धर्मः—(विलोक्य) बाढं—

श्लोकः॥ वासुदेवइवाभाति तमालतरुरग्रतः।
श्यामलश्श्रान्तिहारीच महोच्छ्रायो द्विजाश्रयः॥

तत्पादतलमेवाश्रयामः।

भ्रातरः—यदाज्ञापयत्यार्यः। (इति निष्क्रान्तास्सर्वे)

(ततः प्रविशतो नकुलसहदेवौ।)

नकुलः—वत्स ! पिपासितानामस्मदग्रजानां पानीयमानीयेदानीं अर्पयाव। बहुत्र पर्यटतोरपि न कुत्रापि जलाशयस्थानं परिदृश्यते। किं करवाव ?

सहदेवः—(पुरोऽवलोक्य) भ्रातः ! दूरे जलचरविहगरुतमिव श्रूयते तामेव दिशमवलम्ब्य मार्गयाव। गच्छाग्रतः।

नकुलः—(गच्छन्) अरणिहारी हरिणोऽपि जलार्थी यदि तत्रैव भवेत्तदा सर्वथा वयं सिद्धार्थाः भवामः।

सहदेवः—भवतुनाम सर्वं दैवायत्तम्। भवितव्यं कथं वा प्रथमं ज्ञायते ? (इति परिक्रामतः)।

नकुलः—दिष्ट्या दूरे सरइव दृश्यते। जलकणवाहीवातः आवामाह्वयतीव सारसमञ्जुलकूजितेन (परिक्रम्यावलोक्य) भो अत्र स्वच्छसलिलो जलाशयो दरिद्रस्यैव धनराशिरुपलब्धः॥ तथाहि—

श्लोकः॥ स्वच्छाम्भःप्रकटतलप्रदेशदृश्यं
मन्दोर्मिप्रसरनिरुद्धरिक्तशङ्कम्।
नैर्जन्यस्थपुटतटं सरः पुरस्ता-
दादर्शो ननु वनदेवतोपभोग्यः॥

सहदेवः—आवां तावत् प्राक् प्रक्षालितचरणपाणिमुखौ पीतोदकौ पत्र-पुटे वारि नयाव (इति नकुलेन सह सलिलग्रहणाय पाणिप्रसारणमभिनयति) (आकाशे) भो भो माद्रीमातरौ! मा स्पृशतं मा स्पृशतमम्भः। मम प्रश्नानामुत्तरं दत्वा यथाभिलषितमाचरतम्। (उभौ आकाशे लक्ष्यं बध्वा)।

नकुलः—भोः किमेतत्? अस्मिन् वने जलग्रहणस्यापि निर्बन्धः।

सहदेवः—पिपासया मुमूर्षावस्थायां वर्तावहे किमस्य वचसा? आर्य! गृहाण सलिलम्।

(इति गृहीतसलिलौ हाहेति मूर्छितौ पततः।)

(ततः प्रविशत्यर्जुनः।)

अर्जुनः—हरिणमिव वने चिरादहश्यौ
जलहरणाय गतौ ममानुजातौ।
अपरिचितपरिश्रमौ विचिन्वन्
धृतिरहितोऽस्मि भृशं तयोरलाभात्॥

वनप्रदेशोऽयं शरारुमृगैरतीव भयंकरः। मम मनस्तु अति स्नेहात् पापमेवाशङ्कते। अग्रजस्तु तयोरनुपलब्ध्या नितरां ताम्यति। विचिनोमि तावत्सर्वत्र (इति प्रचलितः सरस्समीपे पतितौ भ्रातरौ पश्यति।) अये! किमेतत्? गतप्राणाविव दृश्येते। हा! वत्सौ! कथमीदृशावपि पश्यामि मन्दभाग्यः। हन्त परिश्रमाधिक्यात् वारिसंस्पर्शनमात्रादेव उद्बुद्धक्लान्तिविशेषौ मूर्च्छितौ वा स्याताम्। भवतुनाम शिरसि वारिसेचनेन बोधयामि तावत्।

(इति सलिलं ग्रहीतुं प्रवर्तते।)

(आकाशे पूर्ववत्) भोः फल्गुन! मा स्पृश मास्पृशोदकम्। अस्मत्प्रश्नानामुत्तरं दत्वा ततः पयो गृहाण।

अर्जुनः—(कर्णं दत्वा) किमेतत्? कस्कोत्रभोः? अस्यां दुस्थितावपि प्रश्नोत्तरसल्लापविनोदः हुं मूढइव परिदृश्यसे प्रच्छन्नवादी त्वम्—(इति सलिलमादाय हाहेति मूर्छितः पतति।)

( ततः प्रविशति भीमसेनः । )

भीमसेनः—श्लोकः ॥ आर्यो हृदीव मृदुरेव वपुष्यतीव
क्लेशानुबन्धदलितो विपिनेऽटनेन ।
भ्रातॄन्विचेतुमकरोदधुना ममाज्ञां
तत्कार्यसाधनकृते प्रयतेऽत्र तावत् ॥

शीतलवातस्पर्शादत्रैव निकटे सलिलवसतिर्भवेत् । (अधः पदचिह्वान्यालोक्य) अहो ! अत्र पदमुद्रास्संलक्ष्यन्ते । अनेन पथा गच्छामि (इति परिक्रम्य पुरोऽवलोक्य) अये ! किमेतत् ? अत्र सरस्समीपे त्रयो मे भ्रातरो मूर्छिताः प्रमीतावा पतिताः । ममाग्रजभयशङ्कात्र सत्येव परिदृश्यते । निकटमेत्य पश्यामि (इति समीपमुपगम्य पश्यति) किं मृतप्रायास्सर्वे ! (विचिन्त्य) किं कारणं भवेत् ? वदने तावत् न तथा वैवर्ण्यं परिदृश्यते । भवतुनाम जलसेचनेनैतान् चिकित्सामि (इति जलं ग्रहीतुं प्रवर्तते) (आकाशे) भो वृकोदर ! मा साहसं कुरु । अस्मदनुयोगस्य प्रत्युत्तरदानानन्तरमेवोदकग्रहणे तवावकाशः नचेदमीषामवस्था तवापि सिद्धा । विमृश्योचितमाचार ।

भीमः—आः कस्त्वम् ? कः प्रश्नः ? भीमसेनमपि प्रश्नैः परीक्षितुमारभसे न ते वागाडम्बरैर्बिभेत्ययं भीमः । सलिलग्रहणेन किं भवति पश्यामि । (इत्युदकं गृहीत्वा हा इत्यधः पतति) (ततः प्रविशति यक्षः) ।

यक्षः—एते चत्वारोऽप्यविमर्शाचाराः अस्मद्वचनमनादृत्य निहताः । इतो धर्मराजोऽप्यत्रागच्छति । स तु सौजन्यपूर्णः । विमृश्यकारी शान्तात्माच । स किं करिष्यति ? पश्यामि । (इति निष्क्रान्तः) ।

(ततः प्रविशति धर्मराजः ।)

धर्मराजः—श्लोकः ॥ भ्रातॄन् पिपासाकुलितांश्चिरेण
वने शरारुप्रचुरे विचिन्वन् ।
मूढोऽस्म्यनासाद्य हतोनियत्या-
कथं नु जीवामि मृतानुजोऽहम् ॥

किमेतत् । हतभाग्ये मयि दैवचेष्टा विचित्रतरा वनवासग्लपितमपि भ्रातृजनसंसर्गसुहितं मां न सहते दुर्विधिः । भवतुनाम । वज्रसारहृदयो दुःखानुभवे युधिष्ठिरः । नियतिलीलाधीनव्यापारे मयि

स्वप्रतापप्रसरणं सम्यगनुतिष्ठतु हतविधिः। इतोऽपि भूयस्सर्वत्र विचिनोमि प्रियभ्रातॄन् (इति सरस्समीपमागत्य भ्रातॄन्विलोक्य) हा हतोऽस्मि मन्दभाग्यः (इति मूर्छितः पतति) (क्षणानन्तरं शनैरुत्थाय) अस्मत्तर्कित-मिवात्र संवृत्तम्। हा! हतविधे! पूर्णकामो भव। दुर्योधनपक्ष-पातिन्! दुर्दैव! इतोऽपि किं विधातुं प्रभवसि? (इत्युच्चैरोदिति। ततः क्षणात् शान्तिमवलम्ब्य) किं कारणमेवं भवितुम्? अतिशयपिपासाभि-भूताः इमे विषमयमत्रपानीयं पीत्वा एवमुपरताः इति शङ्के। (विचिन्त्य) तर्हि कथमत्र जलसत्वानि जीवन्ति? विषप्रचुरसलिले संभूताः प्राणिनो विषमयसलिले जीवन्तीति किं चित्रम्? भवतु-नाम। अहमपि क्ष्वेलमयतोयपानेन भ्रातॄननुसरामि। (इति सलिलग्रहणाय प्रवर्तते)

(आकाशे यक्षः)। भो धर्मराज! मा स्पृश मा स्पृश पानीयम्। इमे तव भ्रातरः मद्वचनमनादृत्य एवं प्रमीताः। भवांस्तु धीमान् विमृश्यकारी च अस्मत्प्रश्नानां प्रथममुत्तरं दत्वा जलं पिबतु। त्वमथवा निजेष्टानुगुणमाचर।

धर्मराजः—(आकाशे लक्ष्यं बध्वा) आर्य! कोनु भवान्? देवपुरुष इति स्वरेण तर्कयामि भवन्तम्। कोवा प्रश्नः? नाहं प्राज्ञस्ते प्रतिवाक्यप्रदाने तथापि यथामति निवेदयामि पृच्छत्वार्यः।

यक्षः—भो युधिष्ठिर! भूमेरपि महद्वस्तु किम्? अन्तरिक्षादुत्तुङ्गतरं किम्? वायोरपि वेगवान् कः?

धर्मराजः—भो देवपुरुष, श्रूयताम्।

मासान् दशोढ्वा जठरेऽथ सूते
या सा हि माता महती धरायाः।
यो जन्मदाता स पितोन्नतः खात्
मनो हि वायोरपि वेगगामि॥

यक्षः—भवतुनाम। जगति सुखी पुरुषः कः। वद तावत् शृणुमः।

धर्मराजः—आकर्णयतु भवान्। पञ्चमेऽहनि षष्ठेवा शाकं पचति यो नरः। अनृणोह्यप्रवासी स वारिचर! मोदते।

यक्षः—साधु धर्मतनय! साधु। जगत्यत्याश्चर्यकरं किम्? वदैतदपि शृणुमः।

धर्मराजः—शृणु देवप्रवर। अहन्यहनि भूतानि प्रविशन्ति यमालयम्।
शेषास्स्थावरमिच्छन्ति किमाश्चर्यमतःपरम्।

यक्षः—(प्रत्यक्षीभूय) साधु युधिष्ठिर! साधु सम्यक् धर्मतत्वमुक्तं भवता प्रीतोऽस्मि ते समञ्जसोत्तरदानेन। इदानीं त्वदनुजेषु यः कश्चित् मदनुग्रहेण प्राणिति तत्कोनु जीवतु?

धर्मराजः—भगवन्! तवानुकम्पया नकुलस्तावज्जीवतु।

यक्षः—भोः पाण्डवाग्रज! प्रख्यातेष्वितरेषु भ्रातृषु सत्सु किमेवं नकुले ते प्रेमबन्धः।

धर्मराजः—भगवन्! मे पितुर्द्वे भार्ये। तयोः प्रथमायाः अहमेकोऽस्मि तनयः। इतरस्याश्च कश्चन पुत्रोऽस्त्विति।

यक्षः—धर्मरत! कुशलमते! तुष्टोऽस्मि ते वचनैः ते भ्रातरस्सर्वेऽपि मदनुग्रहाज्जीवन्तु सुखीभव। (इति वदन् तिरो भवति) (भीमादयस्सर्वेऽप्युत्तिष्ठन्ति)

धर्मराजः—(साश्चर्यं) दिष्ट्या सर्वे संजीविताः।

(ततः प्रविशति शृङ्गातलंमारणिः प्रधावन् कुरङ्गः)

सहदेवः—(नकुलमुद्दिश्य) भ्रातः! पश्य पश्य तवोक्तिं सत्यापयन्निव इतएवाभिवर्तते जलार्थी सएव कुरङ्गः।

नकुलः—सत्यं दैवानुग्रहएव अस्यागमनप्रसङ्गोपि।

धर्मराजः—(हरिणहननायोद्युक्तौ भीमार्जुनाववलोक्य) भ्रातरौ! मा प्रहरतं मा प्रहरतं विधिचोदितोऽयं स्वयमेवास्मदभिमुखीभूतः अतोऽरणिमपि स्वयमेव मुञ्चति वा पश्याम।

भीमार्जुनौ—न सांप्रतमिदानीमौदासीन्यम्।

(इति कुरङ्गहननायोद्धृतायुधौ वैवस्वतमहिम्ना स्तब्धबाहू तूष्णीं तिष्ठतः)

धर्मराजः—(विलोक्य) भ्रातरौ! हरिणं कुतो न प्रहरथः?

(भीमार्जुनौ लज्जां नाटयतः)

(ततो हरिणरूपमुत्सृज्य शमनः स्वस्वरूपं दर्शयति)

(सर्वे संभ्रान्ताः पश्यन्ति)

शमनः—(धर्मराजमुद्दिश्य) भो युधिष्ठिर! भवतो धर्मनिष्ठैव प्रवीराणामपि

त्वदनुजानां श्रेयःपदवी अहं ते पितास्मि शमनः इतःपरं भवतामज्ञातवासनियमपालनावसरः समुपस्थितः । तदा मदनुग्रहात् न कोऽप्यभिजानाति परिवर्तितवेषान् भवतस्सर्वान् गृहाणेदं विप्रवरस्य यज्ञसाधनमपि भवतो धर्मनिष्ठां बुभुत्सुरेवमरचयं । (इत्यरणिमर्पयति)

धर्मराजः—अनुगृहीतोऽस्मि (इति सविनयमरणिं गृहीत्वा प्रणमति)

भीमार्जुनौ—(स्वापराधक्षमां याचतः)

शमनः—(प्रहसन्) सर्वेषां भवतां वासुदेवानुग्रहात् कल्याणप्राप्तिरस्तु किं युष्माकं भूयः प्रियमुपकरोमि सर्वलोकेश्वरं भगवन्तं प्रणमामस्तावत् ।

॥ श्लोकः ॥ निरन्तरनियन्त्रितत्रिजगतीव्यवस्थाक्रमं
स्वभक्तजनचित्तवृत्यनुगुणात्मलीलाक्रियम् ।
अनेकशतसुन्दरीरमणमादियोगेश्वरं
नमाम पुरुषोत्तमं मनुजवेषमब्जेक्षणम् ॥

(इति निष्क्रान्तास्सर्वे)

॥ यक्षप्रश्ननाटकं सम्पूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमतेरामानुजाय नमः ॥

# धर्मव्याधदर्शनंनाम नाटकम्

सूत्रधारः—(प्रविश्य) माता श्रीर्या त्रिजगतां पिता यश्च जनार्दनः।
नमाम दम्पती नित्यौ तौ नित्यशुभसिद्धये ॥

(नांद्यन्ते सूत्रधारः) हन्त भो बुधवरैरलङ्कृतेयं सभा सुधर्मेव प्रतिभाति—एनामावर्जयितुं सुभगं किं वस्तु प्रयोक्तुमुचितमिदानीम्।
(इति चिन्तां नाटयति)

(नेपथ्ये) ॥ श्लोकः ॥ चिरं वेदानधीत्याहं ब्रह्मचर्यव्रते स्थितः।
चराम्यद्य तपो घोरं मोक्षसाम्राज्यसिद्धये ॥

सूत्रधारः—(कर्णंदत्वा) (नेपथ्याभिमुखमवलोक्य च) कस्येयं मञ्जुला फणितिः ? अहो ! ज्ञातं कौशिकोनाम विप्रवटुः अस्मदाशङ्कां निवर्तयन् नाटकविषये मां प्रचोदयितुमिव तपसे वनभुवमागच्छतीति ज्ञायते तदहमपसर्पामि। (इत्यपसरति)

(ततः प्रविशति कौशिकः)

कौशिकः—चिरं वेदानधीत्याहं ब्रह्मचर्यव्रते स्थितः।
चराम्यद्य तपो घोरं मोक्षसाम्राज्यसिद्धये ॥

हन्त ! वनमिदमतिरमणीयं—पवित्रतमं च—अहो ! भगवतस्सृष्टिवैचित्र्यम्—तथाहि—

॥ श्लोकः ॥ निम्नोन्नतायतमहीध्रगुहानिकुञ्जाः
शुद्धापगाः फलसुमोच्चयपादपाश्च।
स्वेच्छाविहारिमृगपक्षिमनोज्ञनादा-
श्शान्तिप्रदा वनभुवस्स्वतएव नूनम् ॥

संसारपाशनिगडितानामजितेन्द्रियाणां तपश्चर्यानाम महती क्लेशावहा—संसृतिसृतावेव तेषां मनःप्रवृत्तिः। तथाहि—

देहाभिमानात्तदनित्यतापि
न गण्यते तत्परिपोषणार्थम्।
अहर्निशं खिद्यति दुर्लभेषु
स्पृहां पदार्थेषु मुहुर्वितन्वन् ॥

किञ्च—॥श्लो॥

पत्नीमोहः पुत्रमोहोऽर्थमोहः पृथ्वीमोहो देहगेहादिमोहः।
एवं मोहैर्नापि सौख्यं न शान्तिः ज्ञानी तस्मान्नैव मुह्यत्यमीषु॥

मम तु चिरन्तनसुकृतवशाद्दुस्सहे संसारे जुगुप्सा अतस्स्वतएव तपस्यभिरुचिश्च। किन्तु पितरौ मे अत्र परिपन्थिनौ वर्तेते। तत्र च तयोर्वृद्धत्वं मदेकपुत्रत्वं मन्ददृक्पाटवं च हेतुः। अतो मे तयोस्सान्निध्यं यद्यप्यवश्यमुचितमेव। (विचिन्त्य) अथवा तत्तत्कर्मानुभवायत्तशरीरे जन्तुजाते अपरैर्न किमप्युपकर्तुं शक्यते। बन्धुजनसाह्यं नाम विपन्नानां केवलं कैतवमेव। अनेकजन्मजडीभूतजीवानां जन्तूनां बन्धुर्नाम को वास्ति लोकेऽस्मिन्? तथाहि—

॥श्लो॥ को वा पुत्रः पिता वा कः का माता साधु पश्यताम्।
संसारमोहमग्नानां बन्धुसम्बन्धबन्धनम्॥

अतो मे दृढीकृतमनसश्शाश्वतश्रेयसे तपश्चरणमेवोचितं हि। अत्र वटतरुमूले शिलातलं प्रशस्तमिव दृश्यते। तदत्रोपविश्य समाहितमनास्तपस्तपे (इति दर्भासने पद्मासनोपविष्टः नासिकाग्रनिहितदृष्टिस्तपस्तपति) ओम्। ओम्। ओम्। (क्षणानन्तरमूर्ध्वमवलोक्य) हन्त किमेतत्? समाधिसिद्धिप्रत्यूहहतमिवात्मानं मन्ये। तथाहि। वृक्षशाखागतेन केनापि पक्षिणा विण्मोचनात् दूषितदेहोऽस्मि। धिगमुं तपोऽन्तरायभूतं विहगम्। (इति क्रोधाग्नितीक्ष्णेन विलोचनेन तं खगं पश्यति तेन दग्धस्सच खगः अधः पतति)

कौशिकः—(विलोक्य) अहो! किमेतत्? ब्रह्मचर्यनियमपरिशुद्धचेतसो मे वेदाध्ययनव्रतसिद्धिमात्रादेव मत्क्रोधः अपराधिनि विहगेऽस्मिन्नेवं फलितः। एवं सति इतोऽपि तपस्सिद्धिशुद्धहृदयानां मुनिवराणां किम्? वा दुष्करं भवति? जह्नुर्नामतपोधनः निरर्गलवेगक्षुब्धकल्लोलां सुरसरितमप्यपिबत्। कुम्भसम्भवोऽगस्त्येऽपि महामुनिः जलनिधिमेव चुलकतलेनाकृष्य पपौ। मम समाननामा कौशिकोपि महर्षिः "अन्यमिन्द्रं करिष्यामि लोकोवास्यादनिन्द्रकः" इत्यपरश्चतुर्मुख इव जगत्सृष्टिकार्ये प्रायतत। अतस्तपःसिद्धानां जगति किमसाध्यमस्ति? किन्तु तपश्चर्यानाम बहुविधविघ्नपरंपराभिहता दुश्चराच। अत्राहमेवेदानीं निदर्शनम्। भवतु नाम मध्याह्नवेलाप्युपस्थिता। ततो विरचितमाध्याह्निकस्नानादिविधिः

भिक्षार्थम् निकटवर्तिनं ग्रामं गच्छामि। (इति कृतस्नानानुष्ठानादिविधिः निकटवर्तिनं ग्रामं गत्वा कस्यचित् गृहमेधिनो गृहद्वारे स्थित्वा) भवति! भिक्षां देहि....... ...............भवति! भिक्षां देहि।

गृहिणी—(अन्तर्गृहात्) प्रक्षालितमषीमलिनहस्ता अहमियमागच्छामि। तावत्प्रतिपालयतु पूज्यतमोऽतिथिवरः (अत्रान्तरे चेलबद्धभारनम्रांसो गृहपतिरागत्य)।

गृहपतिः—अये! शीघ्रमागच्छ गृहाणामुं भारम्। भो धर्मशीले! किमेवं चिरयसि? त्वरितमेहि।

गृहिणी—(शीघ्रमागत्य) स्वामिन्! अहमियमागतैव दीयतां भारः (इति नाट्येन गृहीत्वा) नाथ! कथमियन्तं भारमूढ्वा समागतोऽसि? दुर्भरभारवहनान्नितरां श्रान्तोऽसि। इदमासनमुपविशत्वार्यपुत्रः। (इत्यासनमर्पयित्वा अतिथिं विलोक्य) भोः प्रथमाश्रमिन्! अहमियमर्पयामि भिक्षाम्। किञ्चित्प्रतिपालयतु पूज्यतमो भवान्। (पतिमुद्दिश्य) भोः प्रियतम!

श्लोकः॥ पादौ प्रसार्य सुखोष्णजलेन सम्यक्
प्रक्षालयामि शिशिरव्यजनेन मन्दम्।
संवीजयामि च भुजांसतलं यथेष्टं
संवाहयामि वत तेऽत्यधिकश्श्रमोऽद्य॥
स्नानार्थमुष्णमुदकं परिकल्पितं ते
वस्त्रं च धौतमधुना समुपानयामि।
सन्ध्याविधेर्निहितमत्र पवित्रमम्भः
देवार्चनापरिकरास्सकलाश्च सिद्धाः॥

कौशिकः—भवति! भिक्षां देहि।

गृहिणी—(त्वरितमेत्य) भगवन्! ब्रह्मनिष्ठ! आगताहम्—गृहाणेदानीं भिक्षां क्षन्तव्योऽयं कालातिपातापराधः (इति भिक्षामर्पयितुं स्वहस्तौ प्रसारयति)

कौशिकः—(सक्रोधं) अये! मिथ्याविनयदूषिते! अनेन कैतवभीतिलज्जाभिनयेनालं—किं मां तव गृहदासमिति मन्यसे। किं ते सुगृहिणीनामाचारक्रमशिक्षणं नकेनाप्युपदिष्टं। किमेवमेवातिथिपूजाक्रमः? कियन्तं कालं तव गृहद्वारे ममावस्थितिः—हन्त-धिक्-धिक्—

गृहिणी—भगवन् ! पूज्यतम ! क्षन्तव्योऽयमेको ममापराधः – नाहं त्वत्तिरस्काराचरणार्थं एवमाचरं–किं तु मार्गायासखिन्ने भर्तरि समुपागते तत्परिचर्या प्रथममवश्यं कर्तव्या खलु ?

कौशिकः—( सकोपाधिक्यं ) अहो ! तर्हि पूर्वमेवागताः अतिथयस्तु उपेक्षणीयाः ? अहो ते धर्मनिष्ठा विचित्रतरा। लोकगर्हणार्हा ते प्रवृत्तिरियम्—

गृहिणी—ब्रह्मचारिन् ! मा कुप्यतु भवान् – प्रशान्तमना भव – नाहं त्वत्तिरस्कारार्थं एवमाचरं–सर्वमपि प्रत्यक्षमेवावलोकयन् वर्तसे—तदनुगृहाण–गृहाणेमां भिक्षां (इति हस्तौ पुनः प्रसारयति)

कौशिकः—(सक्रोधोद्रेकं) आस्सर्वमपि प्रत्यक्षमवलोकयन्नेवास्मि–हन्त ते सर्वजननिन्द्योऽयं गर्वोत्कर्षः—तवेदृशदुष्टाचारः कस्यवा क्रोधं न जनयति ? (इति तीक्ष्णदृष्ट्या पश्यति)

गृहिणी—अलमलमेवमतिमात्रक्षुब्धवचनोज्जृम्भणेन। किं मां वनगतं विहगं मन्यसे ? यतः कोपोज्वलदृष्ट्या मामप्यवलोकसे ॥

कौशिकः—(साश्चर्यमात्मगतं) हन्त ! कथमिदं वृत्तमनया ज्ञातम् ?

गृहिणी—नाहं धर्म्यात्पथः किञ्चिदपि परिभ्रष्टा। जगति सतीनां पतिसेवैव प्रधानभूता। न मे पत्युरपरं दैवमस्ति। तस्मिन् सम्यगाराधिते सर्वा देवताः पूजिताएव। एतां निष्ठां त्रिकरणैरप्यनुसरन्ती वर्ते। भवांस्तु वृथा मां निन्दति। ब्रह्मचर्यव्रतस्थितस्य ते नाद्यापि क्रोधो व्यपगतः। क्रोधोनाम मनुष्यस्यान्तर्निलीनो गूढश्शत्रुः विशेषतस्तपोनिष्ठस्य। ब्रह्मज्ञानसाधनपराणां अवश्यं मनश्शान्तिरादरणीया। शान्तात्मनएव ब्रह्मोपासनपदवीस्फूर्तिः नान्येषाम्। पश्येदानीं तावत्। येन तव क्रोधाग्निदीप्तावलोकनेन वने तपस्वी स बकः प्रदग्धः तदेवावलोकनं मां न किमपि कर्तुं शशाक।

कौशिकः—( सभयलज्जं ) भगवति पूज्यतमे ! कथममुं वृत्तान्तं जानासि ?

गृहिणी—विप्रोत्तम ! तद्विहगोदन्तः पातिव्रत्यमहिम्ना प्रत्यक्षदृष्टइव मे प्रतिभाति। एवं परोक्षज्ञानसिद्धाया अपि न मे किञ्चिदप्यवलेपः। यतस्सर्वं भगवदनुग्रहायत्तमिति मे निश्चयः। अतो मय्यनपराधिन्यां कृपां कुरु गृहाण भिक्षामिमां (इति भिक्षामर्पयति)।

कौशिकः—(सविनयभक्तिगौरवं भिक्षां गृहीत्वा) भगवति ! पूज्यतमे ! मर्षणीयो मे महान् मन्तुः। अपरिपक्वबुद्धिना मया रुक्षाक्षरकठोराणि बहूनि दुर्वचांसि जल्पितानि। इहस्थायास्तत्र वनपक्षिवृत्तान्तग्रहणशक्तिमात्रादेव भवत्याः महिमा विदितः। मम ज्ञानपरिपाकशिक्षणमवश्यं भाव्यं। तत्त्वमेव ममाचार्यपदमधिरूढा धर्मसूक्ष्मविचारान् कृपयोपदिश।

गृहिणी—भगवन् तत्वजिज्ञासो! तव श्रेयसे किमपि वक्तुकामास्मि। भवांस्तु ब्रह्मचर्यव्रतपरिशुद्धात्मा। निरन्तरवेदाध्ययनपरिपूतहृदयश्च। अतस्सर्वैः पूज्यतमोऽसि। तथापि तत्वज्ञानरहस्यमवश्यं भवताधिगन्तव्यम्। अतोऽहं ब्रवीमि। मिथिलानगरे धर्मव्याधो नाम धर्मतत्वनिष्णातबुद्धिः कश्चित्पुलिन्दवरो निवसति। तत्सन्निधौ धर्मतत्वसंदेहनिवारणपूर्वकं मोक्षसाधनमार्गमवगच्छ। तत्तत्र याहि भगवन्! भक्तिपुरस्सरोऽयमंजलिस्ते मयार्पितः।

कौशिकः—पूज्यतमे! अलमलमत्यादरेण। सर्वथा वन्दनीयासि मे। धर्मतत्वावबोधनार्थं त्वद्वचनानुसारमद्यैव मिथिलां गच्छामि। देहि मे कृपयानुज्ञाम्।

गृहिणी—शिवास्ते पन्थानस्सन्तु भगवन्! याहीष्टार्थसिद्धये। (इत्यन्तर्गृहं गच्छति)

कौशिकः—हन्त! वनिताजनेष्वपि धर्मतत्वरहस्यज्ञाननैपुण्यम्। अनभिज्ञेन मया तत्सन्निधौ बहुधा अनुचितमाचरितम्। तथापि तया शान्तस्वभावया न किमपि प्रतिकृतम्। किन्तु मयि परंदयैव दर्शिता। तद्वचनानुसारं धर्मव्याधनिकटमद्यैव व्रजामि। (विचिन्त्य) हन्त इदमप्यत्याश्चर्यमिव मे प्रतिभाति। यत् प्राणिवधनिरतात् निषादात् धर्मतत्वोपदेशग्रहणम्। अथवा महात्मनां बहिर्व्यापारो नैव गणनीयः। नापि जात्याद्यवष्टम्भः। किन्तु सतामन्तःकरणवृत्तिरेव सम्भावनीया। (इति मिथिलामेत्य सर्वतो नगरमवलोक्य) अहो! मिथिलानगरस्य वैभवम्। महात्मना जनकेन राजर्षिणा परिपालितेयं पुरी साक्षादमरावतीव राजते तथाहि—

॥श्लो॥ ऋज्वायतामलचतुष्पथवीक्षणीया<br>
श्लाघार्हवस्तुविलसद्विपणिप्रकर्षा।<br>
प्रासादवेश्मगणपूर्णविशालदेशा<br>
सम्पत्समृद्धिसुभगा मिथिलापुरीयम्॥

किञ्च—॥श्लो॥ विद्वांसस्सकलास्सुरूपतनवो नीरोगपुष्टाङ्गकाः
सौम्यास्सत्यरतास्स्वधर्मनिरता दीर्घायुषस्त्यागिनः ।
हन्तैतन्नगरे स्त्रियश्च पुरुषा जानन्ति नैव क्वचित्
क्षामव्याधिसुखापदं क्षितिपतेस्सच्छासनप्राभवात् ॥

कथमत्र नगरप्रवेशमात्रादेव मे मनः प्रशान्तिसुखमनुभवति। आश्चर्यकरपदार्थजातपरिपूर्णोऽयं नगरवरः जनकमहाराजस्य वैभवमभिदर्शयति—कथमत्र महति नगरे तत्पुलिन्दवरस्य मार्गणं साध्यं भवति ? भवतु पृच्छामि तावदागच्छन्तं कमपि पुरुषं ( इत्यागच्छन्तं कमप्यवलोक्य ) भोस्सौम्य ! धर्मव्याधाभिधानस्य शबरपतेर्वसतिः कुत्र ?

पथिकः—आर्य ! वैदेशिकोऽहं न जाने तदन्यं पृच्छ—

कौशिकः—( अपरमागच्छन्तं विलोक्य ) भो महाभाग ! धर्मव्याधाभिधानस्य शबरपतेः वसतिः कुत्रास्ति ?

नागरिकः—ब्रह्मन् ! अनेनैव पथा गच्छ—गव्यूतिमात्रदूरे पक्कणश्रेण्यां वर्तते तत्सदनम्—सतु तत्र किञ्चिद्दूरे सूनागारे मांसविक्रयणं कुर्वन् वर्तते । तत्तत्रावलोकयैनम्—

कौशिकः—तथा (इति दूरं गत्वा धर्मव्याधनिषद्यां दूरतो विलोक्य किञ्चिदुपसृत्य च)—आहा ! किमेतत् ? क्षणमप्यत्र स्थातुं मया न शक्यते—घूर्णतीव मे शीर्षं चक्षुर्द्वयमप्यन्धीभवति—परिशुष्यतीव रसनाद्रवोपि—पादौ च कम्पेते हन्त ! घोरतरदृश्यमत्र तथाहि—

॥श्लो॥ अस्थिग्रन्थिं भषकनिचयः खण्डयत्यत्र दन्तैः
गृद्ध्राः काकाः पिशितशकल प्राप्तयेऽमी डयन्ते ।
क्रन्दन्त्युच्चैर्हननिहिताः प्राणिनो दीनदीनाः
रक्तस्रोतःप्रवहति घनीभूय मन्दं क्रमेण ॥

किञ्च मांसक्रेतॄणां संमर्दोऽप्यत्र विशेषतोऽस्ति ईदृशिप्रदेशे सपुलिन्दः कथं वा विलोकितव्यः ? भवतु नाम। दूरे स्थित्वा किञ्चित्प्रतिपालयामि तावदवकाशं (इति दूरे वृक्षमूले तिष्ठति) (ततः प्रविशति धर्मव्याधः) ।

धर्मव्याधः—दूरे कोऽपि विप्रवरो मामवलोकितुमागत इति शङ्के। तदहमेव गत्वा संमानयामि तं पूज्यतमम् । (इत्यागच्छति)

कौशिकः—(दूरादागच्छन्तंव्याधमवलोक्य) नूनमयमेव सशबरवर इति दृश्यते। यतोऽस्य प्राणिवधनिरतस्यापि मुखे ब्रह्मवर्चः प्रतिभाति। सौजन्यमूर्तिरयमेव मत्सकाशमागच्छतीति ज्ञायते।

धर्मव्याधः—( आगत्य ) भगवन्, ब्राह्मणोत्तम! साञ्जलिबन्धं प्रणमति त्वच्चरणयोः धर्मव्याधदासः। (इति प्रणमति)

कौशिकः—अलमलमत्यादरेण। त्वं मे पूज्यतमोऽसि।

धर्मव्याधः—विप्रोत्तम! किं सुखागमनं भवतः? मार्गायासात् नितरां परिश्रान्त इव दृश्यसे। नात्रोचिता भवतस्स्थितिः। तदेहि। अस्मद्गृहाङ्गणमेव गच्छावः। एह्येहि ब्रह्मन्! त्वदागमनादतीव परितुष्टोऽस्मि। किञ्च भवदागमनकारणमपि वेद्मि। किं सा पतिव्रता गृहिणी भर्त्रा सह कुशलिनी?

कौशिकः—( साश्चर्यातिशयमात्मगतं ) किमेतदस्य माहात्म्यम्? हन्त! कथमस्य तत्साध्वीविचारावगमनम्? कथं वा मदागमनकारणावबोधः? भवतु नाम। (प्रकाशं) सर्वे कुशलिनः। निषादाधिप! किमप्यवगन्तुमिच्छामि।

व्याधः—पृच्छत्वार्यः।

कौशिकः—मदाचार्या सा साध्वीमणिः भवतः परिचितपूर्वा किम्?

व्याधः—न कदापि दृष्टपूर्वा। नापि श्रुतपूर्वा सा।

कौशिकः—तर्हि कथं जानासि ताम्?

व्याधः—भूसुरोत्तम! तव प्रश्नस्योत्तरदाने जिह्रेमि। तथापि निवेदयामि शृणु। सर्वान्तर्यामिनो भगवतो अनुग्रहवशेन जानामि सर्वम्। इदमेवास्मद्गृहम्। किञ्चित् विश्रान्तिसुखमनुभूय तत्र दूरे स्थिते सरसि कृतस्नानसन्ध्यार्चनादिविधिरागच्छतु भवान्। ततः क्षीरफलान्यपि स्वीकरोतु पश्चात्सल्लपावः। ( इति ब्राह्मणं प्रेषयित्वा चिन्तयति)। ब्राह्मणवरोऽयं वेदाध्ययनसम्पन्नो ब्रह्मचर्यनिष्ठात्मा सर्वजनवन्द्यश्च। ईदृशोऽयं पूज्यतमः धर्मतत्वजिज्ञासया मत्सकाशमागतः। कथमस्य महात्मनो मन्मुखाद्धर्मोपदेशः। ( इति चिन्तां नाटयति) भवतुनाम स्ववृत्तान्तनिवेदनपूर्वकं निवेदयामि धर्म-

रहस्यम् । तावदन्तर्गृहे पितरौ प्रेक्षे । (इत्यन्तर्गृहं गच्छति) । (ततः प्रविशतो वृद्धतमौ दम्पती) ।

व्याधः—नमः प्रत्यक्षदेवताभ्याम् । (इति तयोश्चरणयोः पतति)

वृद्धौ—(शनैर्दृशावुन्मील्य) आयुष्मन् ! चिरञ्जीव ।

व्याधः—(सर्वोपचारवस्तूनि सज्जीकृत्य)

पानीयमेतदिह भोजनपात्रयुग्मं
सोपस्करं निहितमत्र कदुष्णमन्नम् ।
ताम्बूलपिण्डमिह मर्दितमत्र शय्या
धौता मृदुश्च रचिता भजतं यथेच्छम् ॥

(इति पितरौ सत्कृत्य द्वारदेशमेत्य आगच्छन्तं ब्राह्मणं दृष्ट्वा) आगच्छ, भगवन् ! आगच्छ । किमनुष्ठितस्स्नानसन्ध्यार्चनादिविधिः किंकृतोऽभ्यवहारश्च ?

कौशिकः—त्वदादरवशात्सर्वमनुष्ठितम् ।

व्याधः—इदमासनमास्यताम् । विश्रान्तिश्चानुभूयताम् । ततो मम वृत्तान्तं प्रथमं तावन्निवेदयामि । शृणोत्वार्यः ।

कौशिकः—अवहितोऽस्मि । कथय । इदानीमेव भवत्कथाम् ।

व्याधः—तर्हि शृणु, भगवन् । जन्मान्तरपापकर्मणा ममैवं शबरकुले जननमभवत् । तथापि गुरूणां महात्मनां चानुग्रहवशात् सर्वदा सुचरितेष्वेव मे मनः प्रवर्तते । कदापि नाहमनृतं वदामि । कामक्रोधादीन् मनोगतान् रिपून् निर्जित्य ब्राह्मणेषु दैवेषु च परमभक्त्या तत्पूजापरो वर्ते । न कस्याप्यनिष्टं मनसापि चिन्तयामि । मातापित्रोः परिचर्यैव मम नित्यव्रतः । तद्विरोधभूतं महदपि सत्कर्म न मे रोचते—हे भगवन् ! सर्वेऽपि जगति जनाः धर्ममार्गे प्रवर्तितुमिच्छन्ति—किन्तु दशस्वेकः तदनुष्ठानपरो भवति वा नवा—

कौशिकः—भो निषादाधिप ! तदेव किञ्चित् पृच्छामि भवन्तम् । एवं धर्मतत्वानि बोधयंस्त्वमेव निर्दयः प्राणिनो निहत्य मांसविक्रयव्यापारे निरतो वर्तसे किमुचितमिदं ते ?

व्याधः—सम्यक् पृष्टं भवता-शृणु भगवन्, महर्षयोऽपि धर्ममर्मचर्चावसरे मुह्यन्ति—क्वचित् धर्मोऽप्यधर्मो भवति क्वचिदधर्मोऽपि धर्मो भवति

धर्मतत्वव्यवस्थानाम अति गहना–सर्वेषामपि जनानां अहिंसा परमो धर्मः तथापि शवरस्य मे मांसविक्रयव्यापारो नैवाधर्मः यतस्स्वहस्तेनैव अहं प्राणिनो न हन्मि परैर्हतान् विक्रीणामि अतो मे नदोषः–यतः–

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

एवं हि शास्त्रवचनम्–ब्राह्मणानामार्जवं सत्यं दया शान्तिः वेदाध्ययनं शास्त्रविहितकर्मानुष्ठानं दैवभक्तिः मनस्तृप्तिः यजन-याजनादिकर्मनिष्ठा इत्यादयो विशेषतः प्रधानभूताः । भवांस्तु महात्मा पूर्वोक्तसकलनियमपरायणोऽपि प्रत्यक्षदैवतं पितरा-वुपेक्षते । तदेव ते धर्मभ्रंशः। तदेव ते महत्पापं इतः अन्तर्गृहमागच्छ-(इति तेन सह गृहान्तर्गत्वा स्वपितरौ प्रदर्श्य) इमावेव मे पितरौ-अनयोस्सर्व-विधपरिचर्यापि मत्पाणिनैव क्रियते–इतोऽप्यपरं परं धर्मं नजाने–एतदर्थं मन्मुखेन बोधयितुमेव सा साध्वी त्वामत्र प्राहिणोत्–ततो भद्र ! त्वं मातापितृसेवापरो भव–इतःपरो न ते अद्य प्रकृष्टतरो धर्मो वर्तते–अनेनैव सर्वं मङ्गलमवाप्स्यसि–तपश्चर्यायाश्च समय-विशेषो वर्तते–निरन्तरं त्वत्स्मरणचिन्ताकुलौ ते पितरौ त्वां प्रतीक्षेते । तत् गच्छ सततमपि तयोराराधनपरो भव एतदेव मम विज्ञापनं–किमन्यद्वक्तव्यमस्ति ?

कौशिकः—व्याधोत्तम ! तवोपदेशवचोभिः नितरां प्रबोधितज्ञानोऽस्मि त्वद्वचनानुसारमेव इतःपरं मातापितृदेवो भवामि–अन्यदपि किञ्चित्प्रष्टुमिच्छामि भवन्तम्–

व्याधः—पृच्छ भगवन्, यथामति निवेदयामि–

कौशिकः—जन्मान्तरपापकर्मणा मे शवरकुले जन्मेत्यवदः किल ? तदप्यवगन्तुमिच्छामि। यदि जानासि यदि च प्रकाशनार्होऽय-मुदन्तः कथयतु भवान् ।

व्याधः—शृणु भगवन् ! पूर्वस्मिन् जन्मनि ब्राह्मणोऽभवं कृतवेदवेदान्तादि-शास्त्रपरिचयस्य मे कथमपि राज्ञा सह परिचयो जातः–ततो राज्ञः प्रेमातिशयात्सततमपि तेन सहवासस्समजनि–ततो धनुर्वेदेऽपि

प्रवीणोऽभवं एकदा मृगयार्थं वनं गच्छता राज्ञा सह अहमपि मृगयायै प्रावर्ते—तदा तत्र कोपि महर्षिकुमारः प्रमादान्मया शरेण विद्धः—तच्छापादेवेदानीं एवं शबरकुलेऽभवं—ततस्तेनैव प्रसन्न-मनसा पूर्वजन्मस्मरणशक्तिः धर्मे प्रवृत्तिश्च अनुगृहीता—एतदेव मम चरित्रम्—सर्वमपि मद्वृत्तान्तं श्रुतवानसि—भगवन्नितः निषद्यां गन्तुमाज्ञां देहि मे—

कौशिकः—हन्त ! परितुष्टोऽस्मि ते तत्वरहस्योपदेशेन त्वच्चरित्राववोधनेन च भवद्वचनानुसारमेव इतःपरं मातापितृसेवापरो वर्ते—याहि निषादोत्तम ! स्वकर्माचरणाय ममाप्याज्ञां दातुमर्हसि गन्तुम् ।

व्याधः—शुभं भवतु गम्यतां श्रेयस्साधनाय—

सर्वे सत्यरतास्सन्तु द्रोहेर्ष्याशाविवर्जिताः ।
गीताद्युपनिषद्गम्यः कृष्णो रक्षतु नः प्रभुः ॥

( इति निष्क्रान्तास्सर्वे )

इति धर्मव्याधदर्शनंनाम नाटकं सम्पूर्णम्

॥ श्रीकृष्णार्पणमस्तु ॥

## विविधविषयकश्लोकाः

का कोकिलस्य वर्णेन काकौपम्येन नश्च्युतिः ।
गाने पञ्चममञ्चन् यो मधु सिञ्चति कर्णयोः ॥ १ ॥

---

मत्कुणा मशकाः रात्रौ दिवा सर्वत्र मक्षिकाः ।
देहमाक्रम्य बाधन्ते नर! को? नरकोऽपरः ॥ २ ॥

---

पद्भ्यामेव चरन्तु भूमिमखिलामङ्घ्रि भुजाभ्यां तर-
न्त्वाकाशे विहगा इवातिजवनाः कामं डयन्तां नराः ।
सर्वं साध्यमिदं त्वसाध्यमसकृच्छृङ्गारभङ्ग्यङ्गनाऽ-
पाङ्गाविर्निगडाद्विमोचनमिति प्रायो मुनीनामपि ॥ ३ ॥

अद्याप्यहं न विरतो वनिताजनेषु
व्यामोहदोहदविवर्धितरागबन्धात् ।
श्रीशानधिष्ठितमिदं हृदयं मदीयं
तत्सूनुराश्रयति हन्त निरन्तरायम् ॥ ४ ॥

---

भोः कुम्भ! स्तनकुम्भयुग्मनिकटे तन्व्या भुजालिङ्गितः
काञ्चीबन्धनसूक्ष्ममध्यमतले पीनं नितम्बं श्रितः ।
तद्वत्तेन मुहुस्त्वमच्छमधुरेणाकण्ठमापूरितो
जीवाधाररसेन भासि सुकृतिन् तप्तं त्वया किं तपः ? ॥ ५ ॥

---

वञ्चनासिद्धिवेषाय नमः काषायवाससे ।
कलौ येनाद्य बहवो रावणार्जुनवृत्तयः ॥ ६ ॥

---

अग्रौ कुचेष्वाश्चरणेन पङ्गोः काणस्य दृग्भ्यां बहुधेति गाधा ।
अनङ्गतामेव समेयुषस्ते सह्याः कथं मार! भवन्ति चेष्टाः ॥ ७ ॥

---

आलोकदर्शितसमस्तपदार्थजालं
व्यादानमीलनसमर्थकवाटपक्ष्म ।
काचावृतं तदपि भाति हि सप्रकाशं
वातायनेक्षणमहो ! गृहरूपपुंसः ॥ ८ ॥

---

राजीवाक्षस्तरुणतुलसीदामवक्षाः कटाक्ष-
क्षेपक्षोणीवलयनिलयक्षेमनिक्षेपदीक्षः ।
कंसध्वंसी करतललसच्छुभ्रभाःपुञ्जशङ्खो
नित्यं प्रत्यक्षमक्ष्णोर्भवतु भवहरो नक्रभिच्चक्रपाणिः ॥ ९ ॥

नानारत्नाभरणकिरणो वेणुपाणिस्स्मितास्यः
श्रीवत्साङ्कः श्रितजननिधिः कौस्तुभालङ्कृतोराः
कारुण्याब्धिः कनकवसनो रुक्मिणीकामुकोऽयं
श्रीमान् मल्लेश्वरनिवसतिः पातु गोपालकृष्णः ॥ १० ॥

---

जलधिमथनवेलाजातहालाहलस्य
ज्वलनमिलनमुह्यद्दैत्यदेवावनार्थम् ।
हरिरनुपदमेवाज्ञापयामास शम्भुं
गरलगिलनकार्ये यस्सपायान्मुकुन्दः ॥ ११ ॥

---

भुजगशयनशायी भक्तवृन्देष्टदायी
सहजविविधमायी सन्ततं चानपायी ।
विहगपरिवृढांसोत्तुङ्गदेशंप्रयायी
वितरतु कुशलं नस्सर्वसम्पद्विधायी ॥ १२ ॥

सरस्वति सरस्वतीपतिनिवासनाभ्यम्बुजं
भुजङ्गशयने शयं शशिशुचिस्मिताब्जाननम् ।
विकस्वरसरोरुहद्युतिहराक्षिविक्षेपणम्
रमाकरतलाम्बुजप्रमृदिताङ्घ्रिपद्मं भजे ॥ १३ ॥

---

अस्मभ्यं भूमिकन्याप्रणयपरिणयी कोऽपि कोदण्डपाणि-
गीर्वाणानां शरण्यो निशिचरपरिषत्खण्डनोद्दण्डकाण्डः ।
पाषाणप्राणविश्राणनचणचरणः काकशोकापहर्ता
कर्ता सेतोः पयोधौ वितरतु कुशलं रामनामाभिरामः ॥ १४ ॥

---

स्वस्थे स्थिते मनसि वर्ष्मणि धातुसाम्ये
योऽजं नरस्स्मरति मां हृदि विश्वरूपम् ।
तं भक्तमत्र मरणोन्मुखमश्मकल्पं
स्मृत्वा नयामि परमां गतिमित्यवोचः ॥ १५ ॥

इदं वचस्साधु विचिन्त्य विष्णो ! त्वदुक्तमत्यन्तदृढं च तथ्यम् ।
मदन्तकाले नय मां पदं ते पदेपदे त्वामिदमेव याचे ॥ १६ ॥

---

समस्तलोकैकशरण्य ! राम ! श्रीराघव ! श्लाघ्ययशो ! महात्मन् ।
निवेदितं कीशवरैर्गृहाण विभीषणं क्षिप्रमुपस्थितं माम् ॥ १७ ॥

---

नवाम्बुदश्याममवाप्तकामं भवाब्धिपोतं च भवार्चिताङ्घ्रिम् ।
निवारिताघौघमवार्यवीर्यं युवानमञ्चामि सुवाससं तम् ॥ १८ ॥

---

कृतकल्कलयेन कान्दिशीकौ
कमलाकान्तकथाकुतूहलेन ।
कनकाञ्चितकान्तकुण्डलाभ्यां
किमु कर्णौ किरतः कदापि कान्तिम् ॥ १९ ॥

---

कालिकाकेलिकालेऽपि शम्भुर्वम्भरसन्निभः ।
रामनाममधु स्वादु पिबन् मत्तः प्रहृष्यति ॥ २० ॥

---

यादवाद्रीशदयितां वन्दे यदुगिरीश्वरीम् ।
स्नुषात्वं यतिराजस्य या संप्रार्थ्याभजच्चिरात् ॥ २१ ॥

---

कमलाकुचकस्तूरीकृताङ्काच्युतपाणिभिः ।
धृतान्यसिगदाशङ्खचक्रशार्ङ्गाणि संश्रये ॥ २२ ॥

तत्तादृक्सुकृताधिकत्वविषये भोः पाञ्चजन्य ! त्वया
या प्राप्ता प्रथमप्रथा त्वदितरैश्चक्रादिभिर्नैव सा ।
यत्त्वं श्रीशकरस्थितिं तदधरास्वादं तदुच्छ्वासभू-
सौरभ्यानिलपानसौख्यमभजो भाग्येऽपि भेदो महान् ॥ २३ ॥

---

## ग्रन्थसमाप्तिः

प्राक्काव्ये प्रविलोप्य किञ्चिदथ तत् स्वीयं वदन्तो बुधाः
केचित्साम्प्रतिकाः महाकवियशो विन्दन्ति चेदश्रमम् ।
शब्दग्राहशरावचक्रवलने संयोज्य सूचीं नवां
गीतिं श्रावयतां कथं न भविता सङ्गीतविद्वत्पदम् ॥ २४ ॥

महात्मानस्ते ते कति कति न सन्ति स्थिरगिरः
प्रणेतारः श्रीशस्तुतिपरमहाकाव्यविततेः ।
मुहुर्दर्शंदर्शं तदखिलकविव्यापककृतीः
श्रये लज्जाभारादपगतमदो मौनमधुना ॥ २५ ॥



# परिशोधनपत्रिका

| पृष्ठे | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १८ | गुणगणा | गुणगणाऽ |
| १५ | ६ | निनिदु | निनिन्दु |
| २४ | २२ | सुदृडं | सुदृढं |
| २९ | ८ | यत्पाण्डवा | यत्खाण्डवा |
| ३३ | भजलक्ष्मीशस्तवे ६ श्लोके | चपलपते | चपलमते |
| | ,, १५ श्लोके | भञ्चन | भञ्जन |
| ३८ | १६ | श्टङ्गात | श्टङ्गांत |
| ५१ | २० | देशं | देश |

1

## अनेन कविना विरचितानि मुद्रितानि च अन्यानि काव्यानि

१. यदुशैलचम्पूः

२. दाशरथिचरितम्

३. वेङ्कटेशपदावलम्बस्तोत्रम्

४. शिविवैभवं नाम नाटकम्

---

*For copies write to :*

**PANDIT JAGGU SINGRAIENGAR**

Sanskrit Pandit,

Someswarapuram, TUMKUR : Mysore State